वाचकमुख्यभगवदुमास्वातिदृब्धं

# श्रीतत्त्वार्थसूत्रम्

सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥ तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ २ ॥ तन्निसर्गादधिगमाद्वा ॥ ३ ॥
जीवाजीवाश्रवबंधसंवरनिर्जरामोक्षास्तत्त्वम् ॥ ४ ॥ नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥ प्रमाणनयैरधिगमः ॥ ६ ॥ निर्देश-
स्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ ७ ॥ सत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वैश्च ॥ ८ ॥ मतिश्रुतावधिमनःपर्याय-
केवलानि ज्ञानम् ॥ ९ ॥ तत्प्रमाणे ॥ १० ॥ आद्ये परोक्षम् ॥ ११ ॥ प्रत्यक्षमन्यत् ॥ १२ ॥ मतिः स्मृतिः संज्ञा चिंताऽभिनिबोध
इत्यनर्थांतरम् ॥ १३ ॥ तदिंद्रियानिंद्रियनिमित्तम् ॥ १४ ॥ अवग्रहेहापायधारणाः ॥ १५ ॥ बहुबहुविधक्षिप्रानिश्रितासंदिग्धध्रुवाणां
सेतराणाम् ॥ १६ ॥ अर्थस्य ॥ १७ ॥ व्यंजनस्यावग्रहः ॥ १८ ॥ न चक्षुरनिंद्रियाभ्याम् ॥ १९ ॥ श्रुतं मतिपूर्वं द्व्यनेकद्वाद-
शभेदम् ॥ २० ॥ द्विविधोऽवधिः ॥ २१ ॥ भवप्रत्ययो नारकदेवानाम् ॥ २२ ॥ यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् ॥ २३ ॥

ऋजुविपुलमती मनःपर्यायः ॥२४॥ विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥२५॥ विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्याययोः
॥२६॥ मतिश्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु ॥२७॥ रूपिष्ववधेः ॥२८॥ तदनन्तभागे मनःपर्यायस्य ॥२९॥ सर्वद्रव्य-
पर्यायेषु केवलस्य ॥ ३० ॥ एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ३१ ॥ मतिश्रुतावधयो विपर्ययश्च ॥ ३२ ॥
सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३३ ॥ नैगमसंग्रहव्यवहारर्जुसूत्रशब्दा नयाः ॥ ३४ ॥ आद्यशब्दौ द्वित्रिभेदौ ॥३५॥

। इति प्रथमोऽध्यायः ।

## ॥ अथ द्वितीयोऽध्यायः ॥

औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥ १ ॥ द्विनवाष्टादशैकविंशतित्रिभेदा
यथाक्रमम् ॥२॥ सम्यक्त्वचारित्रे ॥ ३ ॥ ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥ ज्ञानाज्ञानदर्शनदानादिलब्धयश्च
तुस्त्रित्रिपञ्चभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ॥५॥ गतिकषायलिङ्गमिथ्यादर्शनाज्ञानासंयतासिद्धत्वलेश्याश्चतुश्चतुस्त्र्येकैकैकै
कषड्भेदाः ॥६॥ जीवभव्याभव्यत्वादीनि च ॥७॥ उपयोगो लक्षणम् ॥८॥ स द्विविधोऽष्टचतुर्भेदः ॥९॥ संसारिणो मुक्ताश्च
॥१०॥ समनस्काऽमनस्काः ॥११॥ संसारिणस्त्रसस्थावराः ॥१२॥ पृथिव्यम्बुवनस्पतयः स्थावराः ॥१३॥ तेजोवायू द्वीन्द्रियादयश्च
त्रसाः ॥१४॥ पञ्चेन्द्रियाणि ॥१५॥ द्विविधानि ॥१६॥ निर्वृत्त्युपकरणे द्रव्येन्द्रियम् ॥१७॥ लब्ध्युपयोगौ भावेन्द्रियम् ॥१८॥
उपयोगः स्पर्शादिषु ॥१९॥ स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥२०॥ स्पर्शरसगन्धवर्णशब्दास्तेषामर्थाः ॥२१॥ श्रुतमनिन्द्रियस्य ॥२२॥

वाय्वंतानामेकम् ॥२३॥ कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि ॥२४॥ संज्ञिनः समनस्काः ॥२५॥ विग्रहगतौ कर्मयोगः ॥२६॥ अनुश्रेणि गतिः ॥२७॥ अविग्रहा जीवस्य ॥२८॥ विग्रहवती च संसारिणः प्राक् चतुर्भ्यः ॥२९॥ एकसमयोऽविग्रहः ॥३०॥ एकं द्वौ वाऽनाहारकः ॥३१॥ संमूर्च्छनगर्भोपपाता जन्म ॥३२॥ सचित्तशीतसंवृत्ताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥३३॥ जरायुजांडपोतजानां गर्भः ॥३४॥ नारकदेवानामुपपातः ॥३५॥ शेषाणां संमूर्च्छनम् ॥३६॥ औदारिकवैक्रियाहारकतैजसकार्मणानि शरीराणि ॥३७॥ परं परं सूक्ष्मम् ॥३८॥ प्रदेशतोऽसंख्येयगुणं प्राक् तैजसात् ॥३९॥ अनंतगुणे परे ॥४०॥ अप्रतिघाते ॥४१॥ अनादिसंबन्धे च ॥४२॥ सर्वस्य ॥४३॥ तदादीनि भाज्यानि युगपदेकस्याचतुर्भ्यः ॥४४॥ निरुपभोगमंत्यम् ॥४५॥ गर्भसंमूर्च्छनजमाद्यम् ॥४६॥ वैक्रियमौपपातिकम् ॥४७॥ लब्धिप्रत्ययं च ॥४८॥ शुभं विशुद्धमव्याघाति चाहारकं चतुर्दशपूर्वधरस्यैव ॥४९॥ नारकसंमूर्च्छिनो नपुंसकानि ॥५०॥ न देवाः ॥५१॥ औपपातिकचरमदेहोत्तमपुरुषासंख्येयवर्षायुषोऽनपवर्त्यायुषः ॥५२॥

। इति द्वितीयोऽध्याय. ।

## ॥ अथ तृतीयोऽध्यायः ॥

रत्नशर्करावालुकापंकधूमतमोमहातमःप्रभा भूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताधोऽधः पृथुतराः ॥१॥ तासु नारकाः ॥२॥ नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥३॥ परस्परोदीरितदुःखाः ॥४॥ संक्लिष्टासुरोदीरितदुःखाश्च प्राक् चतुर्थ्याः ॥५॥ तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्त्वानां परा स्थितिः ॥६॥ जम्बूद्वीपलवणादयः शुभनामानो

द्वीपसमुद्राः ॥७॥ द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥८॥ तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कम्भो जम्बूद्वीपः ॥९॥ तत्र भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि ॥१०॥ तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वताः ॥११॥ द्विर्धातकीखण्डे ॥१२॥ पुष्करार्धे च ॥१३॥ प्राङ् मानुषोत्तरान्मनुष्याः ॥१४॥ आर्या म्लेच्छाश्च ॥१५॥ भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः ॥१६॥ नृस्थिती परापरे त्रिपल्योपमान्तर्मुहूर्ते ॥१७॥ तिर्यग्योनीनां च ॥१८॥

॥ इति तृतीयोऽध्यायः ॥

## ॥ अथ चतुर्थोऽध्याय ॥

देवाश्चतुर्निकायाः ॥१॥ तृतीयः पीतलेश्यः ॥२॥ दशाष्टपञ्चद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः ॥३॥ इंद्रसामानिकत्रायस्त्रिंशपारिषद्यात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्बिषिकाश्चैकशः ॥४॥ त्रायस्त्रिंशलोकपालवर्ज्या व्यन्तरज्योतिष्काः ॥५॥ पूर्वयोर्द्वीन्द्राः ॥६॥ पीतान्तलेश्याः ॥७॥ कायप्रवीचारा आ ऐशानात् ॥८॥ शेषाः स्पर्शरूपशब्दमनःप्रवीचारा द्वयोर्द्वयोः ॥९॥ परेऽप्रवीचाराः ॥१०॥ भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ॥११॥ व्यन्तराः किन्नरकिंपुरुषमहोरगगान्धर्वयक्षराक्षसभूतपिशाचाः ॥१२॥ ज्योतिष्काः सूर्याचंद्रमसौ ग्रहनक्षत्रप्रकीर्णतारकाश्च ॥१३॥ मेरुप्रदक्षिणा नित्यगतयो नृलोके ॥१४॥ तत्कृतः कालविभागः ॥१५॥ बहिरवस्थिताः ॥१६॥ वैमानिकाः ॥१७॥ कल्पोपपन्नाः कल्पातीताश्च ॥१८॥

उपर्युपरि ॥ १९ ॥ सौधर्मैशानसनत्कुमारमाहेंद्रब्रह्मलोकलांतकमहाशुक्रसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयवैजयंतजयंतापराजितेषु सर्वार्थसिद्धे च ॥ २० ॥ स्थितिप्रभावसुखद्युतिलेश्याविशुद्धींद्रियावधिविषयतोऽधिकाः ॥ २१ ॥ गतिशरीरपरिग्रहाभिमानतो हीनाः ॥२२॥ पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥२३॥ प्राग्ग्रैवेयकेभ्यः कल्पाः ॥२४॥ ब्रह्मलोकालया लोकांतिकाः ॥२५॥ सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधमरुत अरिष्टाश्च ॥ २६ ॥ विजयादिषु द्विचरमाः ॥ २७ ॥ औपपातिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ॥२८॥ स्थितिः ॥२९॥ भवनेषु दक्षिणार्धाधिपतीनां पल्योपममध्यर्धम् ॥३०॥ शेषाणां पादोने ॥३१॥ असुरेंद्रयोः सागरोपममधिकं च ॥३२॥ सौधर्मादिषु यथाक्रमम् ॥३३॥ सागरोपमे ॥३४॥ अधिके च ॥३५॥ सप्त सनत्कुमारे ॥३६॥ विशेषत्रिसप्तदशैकादशत्रयोदशपंचदशभिरधिकानि च ॥३७॥ आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च ॥३८॥ अपरा पल्योपममधिकं च ॥३९॥ सागरोपमे ॥४०॥ अधिके च ॥४१॥ परतः परतः पूर्वा पूर्वानंतरा ॥४२॥ नारकाणां च द्वितीयादिषु ॥४३॥ दश वर्षसहस्राणि प्रथमायाम् ॥४४॥ भवनेषु च ॥४५॥ व्यंतराणां च ॥४६॥ परा पल्योपमम् ॥४७॥ ज्योतिष्काणामधिकम् ॥४८॥ ग्रहाणामेकम् ॥४९॥ नक्षत्राणामर्धम् ॥५०॥ तारकाणां चतुर्भागः ॥५१॥ जघन्या त्वष्टभागः ॥५२॥ चतुर्भागः शेषाणाम् ॥५३॥

। इति चतुर्थोऽध्यायः ।



## ॥ अथ पञ्चमोऽध्याय ॥

अजीवकाया धर्माधर्माकाशपुद्गलाः ॥१॥ द्रव्याणि जीवाश्च ॥२॥ नित्यावस्थितान्यरूपीणि ॥३॥ रूपिणः पुद्गलाः
॥४॥ आऽऽकाशादेकद्रव्याणि ॥५॥ निष्क्रियाणि च ॥६॥ असंख्येयाः प्रदेशा धर्माधर्मयोः ॥७॥ जीवस्य च ॥८॥ आकाश-
स्यानंताः ॥९॥ संख्येयासंख्येयाश्च पुद्गलानाम् ॥१०॥ नाणोः ॥११॥ लोकाकाशेऽवगाहः ॥१२॥ धर्माधर्मयोः कृत्स्ने ॥१३॥
एकप्रदेशादिषु भाज्यः पुद्गलानाम् ॥१४॥ असंख्येयभागादिषु जीवानाम् ॥१५॥ प्रदेशसंहारविसर्गाभ्यां प्रदीपवत् ॥१६॥
गतिस्थित्युपग्रहो धर्माधर्मयोरुपकारः ॥१७॥ आकाशस्यावगाहः ॥१८॥ शरीरवाङ्मनःप्राणापानाः पुद्गलानाम् ॥१९॥ सुखदुःख
जीवितमरणोपग्रहाश्च ॥२०॥ परस्परोपग्रहो जीवानाम् ॥२१॥ वर्तना परिणामः क्रिया परत्वापरत्वे च कालस्य ॥२२॥ स्पर्श
रसगंधवर्णवंतः पुद्गलाः ॥२३॥ शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायाऽऽतपोद्योतवन्तश्च ॥२४॥ अणवः स्कन्धाश्च ॥२५॥
संघातभेदेभ्य उत्पद्यंते ॥२६॥ भेदादणुः ॥२७॥ भेदसंघाताभ्यां चाक्षुषाः ॥२८॥ उत्पादव्ययध्रौव्ययुक्तं सत् ॥२९॥ तद्भावाव्ययं
नित्यम् ॥३०॥ अर्पितानर्पितसिद्धेः ॥३१॥ स्निग्धरूक्षत्वाद् बन्धः ॥३२॥ न जघन्यगुणानाम् ॥३३॥ गुणसाम्ये सदृशानाम् ॥३४॥
द्व्यधिकादिगुणानां तु ॥३५॥ बंधे समाधिकौ पारिणामिकौ ॥३६॥ गुणपर्यायवद् द्रव्यम् ॥३७॥ कालश्चेत्येके ॥३८॥ सोऽनंत
समयः ॥३९॥ द्रव्याश्रया निर्गुणा गुणाः ॥४०॥ तद्भावः परिणामः ॥४१॥ अनादिरादिमांश्च ॥४२॥ रूपिष्वादिमान् ॥४३॥
योगोपयोगौ जीवेषु ॥४४॥

॥ इति पञ्चमोऽध्यायः ॥

# ॥ अथ षष्ठोऽध्यायः ॥

कायवाङ्मनःकर्म योगः ॥ १ ॥ स आश्रवः ॥२॥ शुभः पुण्यस्य ॥३॥ अशुभः पापस्य ॥ ४ ॥ सकषायाकषाययोः सांपरायिकेर्यापथयोः ॥५॥ इंद्रियकषायाव्रतक्रियाः पंचचतुःपंचपचविंशतिसंख्याः पूर्वस्य भेदाः ॥६॥ तीव्रमंदज्ञाताज्ञातभाववीर्याधिकरणविशेषेभ्यस्तद्विशेषः (विशेषात्तद्विशेषः) ॥७॥ अधिकरणं जीवाजीवाः ॥८॥ आद्यं संरंभसमारंभारंभयोगकृतकारितानुमतकषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकशः ॥ ९ ॥ निर्वर्त्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परं ॥ १० ॥ तत्प्रदोषनिह्नवमात्सर्यांतरायासादनोपघाता ज्ञानदर्शनावरणयोः ॥११॥ दुःखशोकतापाक्रंदनवधपरिदेवनान्यात्मपरोभयस्थान्यसद्वेद्यस्य ॥१२॥ भूतव्रत्यनुकंपादानसरागसंयमादियोगक्षांतिशौचमिति सद्वेद्यस्य ॥ १३ ॥ केवलिश्रुतसंघधर्मदेवावर्णवादो दर्शनमोहस्य ॥ १४ ॥ कषायोदयात्तीव्रात्मपरिणामश्चारित्रमोहस्य ॥ १५ ॥ बह्वारंभपरिग्रहत्वं च नारकस्यायुषः ॥ १६ ॥ माया तैर्यग्योनस्य ॥ १७ ॥ अल्पारंभपरिग्रहत्वं स्वभावमार्दवाऽऽर्जवत्वं च मानुषस्य ॥१८॥ निःशीलव्रतत्वं च सर्वेषां ॥१९॥ सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसिच देवस्य ॥२०॥ योगवक्रताविसंवादनं चाशुभस्य नाम्नः ॥२१॥ विपरीतं शुभस्य ॥२२॥ दर्शनविशुद्धिर्विनयसंपन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्ण ज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी संघसाधुसमाधिवैयावृत्त्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकृत्त्वस्य ॥२३॥ परात्मनिंदाप्रशंसे सदसद्गुणाच्छादनोद्भावने च नीचैर्गोत्रस्य ॥ २४ ॥ तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥२५॥ विघ्नकरणमंतरायस्य ॥ २६ ॥

॥ इति षष्ठोऽध्यायः ॥

## ॥ अथ सप्तमोऽध्याय ॥

हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥१॥ देशसर्वतोऽणुमहती ॥२॥ तत्स्थैर्यार्थं भावनाः पंच पंच ॥३॥ हिंसादिष्विहामुत्रापायावद्यदर्शनम् ॥४॥ दुःखमेव वा ॥५॥ मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु ॥६॥ जगत्कायस्वभावौ च संवेगवैराग्यार्थम् ॥७॥ प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा ॥८॥ असदभिधानमनृतम् ॥९॥ अदत्तादानं स्तेयम् ॥१०॥ मैथुनमब्रह्म ॥११॥ मूर्च्छा परिग्रहः ॥१२॥ निःशल्यो व्रती ॥१३॥ अगार्यनगारश्च ॥१४॥ अणुव्रतोऽगारी ॥१५॥ दिग्देशानर्थदण्डविरतिसामायिकप्रोषधोपवासोपभोगपरिभोगपरिमाणातिथिसंविभागव्रतसंपन्नश्च ॥१६॥ मारणान्तिकीं सल्लेखनां जोषिता ॥१७॥ शंकाकांक्षाविचिकित्सान्यदृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतिचाराः ॥१८॥ व्रतशीलेषु पंच पंच यथाक्रमम् ॥१९॥ बन्धवधच्छेदातिभारारोपणान्नपाननिरोधाः ॥२०॥ मिथ्योपदेशरहोभ्याख्यानकूटलेखक्रियान्यासापहारसाकारमन्त्रभेदाः ॥२१॥ स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहाराः ॥२२॥ परविवाहकरणेत्वरिकापरिगृहीतापरिगृहीतागमनानंगक्रीडातीव्रकामाभिनिवेशाः ॥२३॥ क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्रमाणातिक्रमाः ॥२४॥ ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यन्तराधानानि ॥२५॥ आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपाः ॥२६॥ कन्दर्पकौत्कुच्यमौखर्यासमीक्ष्याधिकरणोपभोगपरिभोगानर्थक्यानि ॥२७॥ योगदुष्प्रणिधानानादरस्मृत्यनुपस्थानानि ॥२८॥ अप्रत्यवेक्षिताप्रमार्जितोत्सर्गादाननिक्षेपसंस्तरोपक्रमणानादरस्मृत्यनुपस्थापनानि ॥२९॥ सचित्तसंबन्धसंमिश्राभिषवदुःपक्वाहाराः ॥३०॥

सचित्तनिक्षेपपिधानपरव्यपदेशमात्सर्यकालातिक्रमाः ॥ ३१ ॥ जीवितमरणाशंसामित्रानुरागसुखानुबंधनिदानकरणानि ॥ ३२ ॥ अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥ ३३ ॥ विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः ॥ ३४ ॥

॥ इति सप्तमोऽध्यायः ॥

## ॥ अथ अष्टमोऽध्यायः ॥

मिथ्यादर्शनाविरतिप्रमादकषाययोगा बंधहेतवः ॥१॥ सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते ॥२॥ स बंधः ॥ ३ ॥ प्रकृतिस्थित्यनुभावप्रदेशास्तद्विधयः ॥ ४ ॥ आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रांतरायाः ॥५॥ पंचनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपंचभेदा यथाक्रमम् ॥ ६ ॥ मत्यादीनां ॥ ७ ॥ चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धिवेदनीयानि च ॥८॥ सदसद्वेद्ये ॥९॥ दर्शनचारित्रमोहनीयकषायनोकषायवेदनीयाख्यास्त्रिद्विषोडशनवभेदाः सम्यक्त्वमिथ्यात्वतदुभयानि कषायनोकषायावनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभाः हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदाः ॥१०॥ नारकतैर्यग्योनमानुषदैवानि ॥११॥ गतिजातिशरीरांगोपांगनिर्माणबंधनसंघातसंस्थानसंहननस्पर्शरसगंधवर्णानुपूर्व्यगुरुलघूपघातपरघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तस्थिरादेययशांसि सेतराणि तीर्थकृत्त्वं च ॥ १२ ॥ उच्चैर्नीचैश्च ॥ १३ ॥ दानादीनाम् ॥ १४ ॥ आदितस्तिसृणामंतरायस्य च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः ॥१५॥ सप्ततिर्मोहनीयस्य ॥१६॥ नामगोत्रयोर्विंशतिः ॥१६॥

## ॥ अथ सप्तमोऽध्याय ॥

हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥ १ ॥ देशसर्वतोऽणुमहती ॥ २ ॥ तत्स्थैर्यार्थं भावनाः पंच पंच ॥ ३ ॥
हिंसादिष्विहामुत्र चापायावद्यदर्शनम् ॥४॥ दुःखमेव वा ॥५॥ मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु
॥६॥ जगत्कायस्वभावौ च संवेगवैराग्यार्थम् ॥७॥ प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा ॥८॥ असदभिधानमनृतम् ॥९॥ अदत्तादानं
स्तेयम् ॥ १० ॥ मैथुनमब्रह्म ॥ ११ ॥ मूर्च्छा परिग्रहः ॥ १२ ॥ निःशल्यो व्रती ॥१३॥ अगार्यनगारश्च ॥१४॥ अणुव्रतोऽगारी
॥ १५ ॥ दिग्देशानर्थदंडविरतिसामायिकपौषधोपवासोपभोगपरिभोगपरिमाणातिथिसंविभागव्रतसंपन्नश्च ॥ १६ ॥ मारणांतिकीं
संलेखनां जोषिता ॥१७॥ शंकाकांक्षाविचिकित्सान्यदृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतिचाराः ॥१८॥ व्रतशीलेषु पंच पंच यथा-
क्रमम् ॥१९॥ बंधवधच्छेदातिभारारोपणान्नपाननिरोधाः ॥२०॥ मिथ्योपदेशरहस्याभ्याख्यानकूटलेखक्रियान्यासापहार-
साकारमंत्रभेदाः ॥२१॥ स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहाराः ॥२२॥ परविवाह-
करणेत्वरपरिगृहीतापरिगृहीतागमनानंगक्रीडातीव्रकामाभिनिवेशाः ॥२३॥ क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्रमाणा-
तिक्रमाः ॥२४॥ ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यंतराधानानि ॥२५॥ आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपाः ॥२६॥
कंदर्पकौत्कुच्यमौखर्यासमीक्ष्याधिकरणोपभोगाधिकत्वानि ॥२७॥ योगदुष्प्रणिधानानादरस्मृत्यनुपस्थानानि ॥२८॥ अप्रत्यवे-
क्षिताप्रमार्जितोत्सर्गादाननिक्षेपसंस्तरोपक्रमणानादरस्मृत्यनुपस्थानानि ॥२९॥ सचित्तसंबद्धसंमिश्राभिषवदुःपक्वाहाराः ॥३०॥

सचित्तनिक्षेपपिधानपरव्यपदेशमात्सर्यकालातिक्रमाः ॥ ३१ ॥ जीवितमरणाशंसामित्रानुरागसुखानुबंधनिदानकरणानि ॥ ३२ ॥
अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥३३॥ विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः ॥३४॥

॥ इति सप्तमोऽध्यायः ॥

## ॥ अथ अष्टमोऽध्यायः ॥

मिथ्यादर्शनाविरतिप्रमादकषाययोगा बंधहेतवः ॥१॥ सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते ॥२॥
स बंधः ॥ ३ ॥ प्रकृतिस्थित्यनुभावप्रदेशास्तद्विधयः ॥४॥ आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रांतरायाः ५॥
पंचनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपंचभेदा यथाक्रमम् ॥ ६ ॥ मत्यादीनां ॥७॥ चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्रा-
प्रचलाप्रचलाप्रचलास्त्यानगृद्धिवेदनीयानि च ॥८॥ सदसद्वेद्ये ॥९॥ दर्शनचारित्रमोहनीयकषायनोकषायवेदनीयाख्यास्त्रिद्विषो-
डशनवभेदाः सम्यक्त्वमिथ्यात्वतदुभयानि कषायनोकषायावनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोध-
मानमायालोभाः हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदाः ॥१०॥ नारकतैर्यग्योनमानुषदैवानि ॥११॥ गतिजातिशरीरांगो-
पांगनिर्माणबंधनसंघातसंस्थानसंहननस्पर्शरसगंधवर्णानुपूर्व्यगुरुलघूपघातपराघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीर-
त्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तस्थिरादेययशांसि सेतराणि तीर्थकृत्त्वं च ॥ १२ ॥ उच्चैर्नीचैश्च ॥ १३ ॥ दानादीनाम् ॥ १४ ॥
आदितस्तिसृणामंतरायस्य च त्रिंशत्सागरोपमकोटीकोटयः परा स्थितिः ॥१५॥ सप्ततिर्मोहनीयस्य ॥१६॥ नामगोत्रयोर्विंशतिः ॥१६॥

नामगोत्रयोर्विंशतिः ॥१७॥ त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य (त्रयस्त्रिंशत्सागराण्यधिकान्यायुष्कस्य) ॥१८॥ अपरा द्वादश मुहूर्ता वेदनीयस्य ॥१९॥ नामगोत्रयोरष्टौ ॥२०॥ शेषाणामन्तर्मुहूर्तम् ॥२१॥ विपाकोऽनुभावः ॥२२॥ स यथानाम ॥२३॥ ततश्च निर्जरा ॥२४॥ नामप्रत्ययाः सर्वतो योगविशेषात् सूक्ष्मैकक्षेत्रावगाढस्थिताः सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशाः ॥२५॥ सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यम् ॥२६॥

॥ इति अष्टमोऽध्यायः ॥

## ॥ अथ नवमोऽध्याय ॥

आस्रवनिरोधः संवरः ॥१॥ स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥२॥ तपसा निर्जरा च ॥३॥ सम्यग्योगनिग्रहो गुप्तिः ॥४॥ ईर्याभाषैषणाऽऽदाननिक्षेपोत्सर्गाः समितयः ॥५॥ उत्तमः क्षमामार्दवाऽऽर्जवशौचसत्यसंयमतपस्त्यागाऽऽकिंचन्यब्रह्मचर्याणि धर्मः ॥६॥ अनित्याशरणसंसारैकत्वान्यत्वाशुचित्वास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्याततत्त्वानुचिन्तनमनुप्रेक्षाः ॥७॥ मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः ॥८॥ क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याऽऽक्रोशवधयाचनाऽलाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाऽज्ञानादर्शनानि ॥९॥ सूक्ष्मसंपरायच्छद्मस्थवीतरागयोश्चतुर्दश ॥१०॥ एकादश जिने ॥११॥ बादरसंपराये सर्वे ॥१२॥ ज्ञानावरणे प्रज्ञाज्ञाने ॥१३॥ दर्शनमोहान्तराययोरदर्शनालाभौ ॥१४॥ चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याऽऽक्रोशयाचनासत्कारपुरस्काराः ॥१५॥ वेदनीये शेषाः ॥१६॥ एकादयो भाज्या युगपदेकोनविंशतिः ॥१७॥

सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातानि चारित्रम् ॥१८॥ अनशनावमौदर्यवृत्तिपरिसंख्यानरसपरित्याग-
विविक्तशय्यासनकायक्लेशा बाह्यं तपः ॥१९॥ प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरम् ॥२०॥ नवचतुर्दशपंच-
द्विभेदं यथाक्रमं प्राग्ध्यानात् ॥२१॥ आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपच्छेदपरिहारोपस्थापनानि ॥२२॥ ज्ञानदर्शन-
चारित्रोपचाराः ॥२३॥ आचार्योपाध्यायतपस्विशैक्षकग्लानगणकुलसंघसाधुसमनोज्ञानाम् ॥२४॥ वाचनापृच्छनाऽनुप्रेक्षाऽऽम्नाय-
धर्मोपदेशाः ॥२५॥ बाह्याभ्यंतरोपध्योः ॥२६॥ उत्तमसंहननस्यैकाग्रचिंतानिरोधो ध्यानम् ॥२७॥ आ मुहूर्त्तात् ॥२८॥
आर्त्तरौद्रधर्म्यशुक्लानि ॥२९॥ परे मोक्षहेतू ॥३०॥ आर्तममनोज्ञानां सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥३१॥
वेदनायाश्च ॥३२॥ विपरीतं मनोज्ञानाम् ॥३३॥ निदानं च (कामोपहतचित्तानां पुनः) ॥३४॥ तदविरतदेशविरतप्रमत्तसंयतानाम्
॥३५॥ हिंसाऽनृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥३६॥ आज्ञाऽपायविपाकसंस्थानविचयाय धर्म्यमप्रमत्तसंयतस्य
॥३७॥ उपशांतक्षीणकषाययोश्च ॥३८॥ शुक्ले चाद्ये ॥३९॥ पूर्वविदः ॥४०॥ परे केवलिनः ॥४१॥
पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवृत्तीनि ॥४२॥ तत् त्र्येककाययोगायोगानाम् ॥४३॥ एकाश्रये सवितर्के पूर्वे
॥४४॥ अविचारं द्वितीयम् ॥४५॥ वितर्कः श्रुतम् ॥४६॥ विचारोऽर्थव्यंजनयोगसंक्रांतिः ॥४७॥ सम्यग्दृष्टिश्रावकविरतानंत-
वियोजकदर्शनमोहक्षपकोपशमकोपशांतमोहक्षपकक्षीणमोहजिनाः क्रमशोऽसंख्येयगुणनिर्जराः ॥४८॥ पुलाकबकुशकुशीलनिर्ग्रंथ-
स्नातका निर्ग्रंथाः ॥४९॥ संयमश्रुतप्रतिसेवनातीर्थलिंगलेश्योपपातस्थानविकल्पतः साध्याः ॥५०॥

॥ इति नवमोऽध्यायः ॥

परतोऽर्धार्धहीनं ॥७॥ पुरुषस्त्रीलिंगमध्यावगाहामरवैमानिकतिर्यग्लोकेऽ-
चत्वारि गव्यूतान्यवधिराद्ये परापर. ॥ ६ ॥ नपुंसकान्यलिंगनरकतिर्यक्त्रिपृथ्वीतिर्यक्-
छ्शतम् ॥ ८ ॥ स्त्रीनरगतिनारीज्योतिष्कदेवीवैमानिकदेवीभ्यो विंशतिः ॥ ९ ॥ द्वौ द्वात्रिंशतिः
पुरुषस्त्रीत्रिनिकायदेवेभ्यो दश ॥ १० ॥ उत्कृष्टावगाहनेऽधोलोके वनस्पतिभ्यो व्यन्तरान्तदेवीभ्यः क्रमाद्
षट् पञ्च ॥११॥ शृहिलगजघन्यावगाहोर्ध्वलोकपृथ्वीजलेभ्यश्चत्वारः ॥ १२ ॥ द्वात्रिंशदष्टचत्वारिंशत्षष्टिद्वासप्ततिचतुरशीति-
षण्णवतिद्व्यष्टाधिकसिद्धिरष्टादिषु समयेषु ॥ १३ ॥ द्वाविंशतिसप्तत्रिदशवर्षसहस्रत्रिदिनद्वादशवर्षैकोनपञ्चाशद्दिनषण्मासत्रिप-
ल्यायुषः यथाक्रमं पृथ्व्यब्वायुवनस्पत्यग्निद्वित्रिचतुष्पञ्चेन्द्रियाणाम् ॥ १४ ॥ परमाणवोऽनन्तास्त्रसरेणुरथरेणुवालाग्रलिक्षायु-
कायवाङ्गुला अष्टगुणाः ॥१५॥ द्वादशसप्तत्रिसप्ताष्टाविंशतिसप्ताष्टनवार्धत्रयोदशद्वादशदशदशनवद्वादशषड्विंशतिपञ्चविंशति-
लक्षाः कुलकोट्यः पृथ्व्यप्तेजोवायुवनस्पतिद्वित्रिचतुरिन्द्रियजलचरखेचरचतुष्पदोरोभुजपरिसर्पनरामरनिरयेषु यथाक्रमम् ॥१६॥
अष्टोच्चा द्वादशचतुर्मूलोपरिपृथुला जगत्यः ॥ १७ ॥ द्विपादगव्यूतोच्चायामा वेदिका ऊनद्वययोजनवनशिरस्काः ॥ १८ ॥
एकद्विचतुःशतयोजनोच्चा हिमवन्महाहिमवन्निषधा. शिखरिरुक्मिनीलाः ॥ १९ ॥ आ विदेहेभ्यो द्विगुण उभयतो
वर्षवर्षधराणां व्यायामः ॥ २० ॥ द्रहाः सदेव्यावासकमलाः गिर्युच्चत्वदशगुणदैर्घ्या अर्धविस्तीर्णा दशयोजनोद्वेधाः ॥ २१ ॥
गङ्गासिन्धू रोहितारोहितास्ये हरिकान्ताहरिसलिले सीतोदासीते नरकान्तानारीकान्ते सुवर्णरूप्यकूले रक्तारक्तवत्यौ भरतादिषु

दशोपरि प्रस्तटाः ॥ ५३ ॥ आद्यद्वय उत्कृष्टनिजप्रतरभक्तेष्टप्रतरगुणा ॥५४॥ शेषेषु विश्लेषस्य साधस्तना पुनः ॥ ५५ ॥
त्र्यस्रचतुरस्रवृत्ता दिक्षु द्वाषष्टिपर्यन्तैकैकहीना विमानाः ॥ ५६ ॥ वृत्तमिन्द्रक मध्ये ॥ ५७ ॥ स्वयंभूद्वीपे षोडश ॥५८॥ न प्रागाल्यां
पुष्पावकीर्णाः ॥५९॥ षट् सहस्राणि सामानिकाः ॥ ६० ॥ चतुःषष्टिः षष्टिश्चासुरयोः ॥ ६१ ॥ चतुर्गुणा आत्मरक्षाः ॥ ६२ ॥
व्यन्तराणां चत्वारि ॥ ६३ ॥ चतुस्त्रिंशच्चतुश्चत्वारिंशदष्टत्रिंशत्पंचकृत्वश्चत्वारिंशत्पञ्चाशच्चत्वारिंशल्लक्षा उत्तरतश्चतुर्लक्षहीनाः
भवनाः ॥६४॥ चूडामणिफणिगरुडवज्रकलशसिंहाश्व (अभिषेक) गजमकरवर्धमानांकाः ॥६५॥ समभुवो दशोनाष्टशत्यास्तारकाः
॥६६॥ ततो दशाशीतिचतुश्चतुस्त्रित्रित्रिषु अधिकेषु रविचन्द्रनक्षत्रबुधशुक्रजीवमङ्गलशनैश्चराः ॥६७॥ एकषष्ट्यंशाः षट्पञ्चाशदष्ट-
चत्वारिंशच्चन्द्रसूर्ययोर्विमानाः ॥६८॥ शेषा द्व्येकार्धगव्यूताः ॥६९॥ यथोत्तरं शीघ्राः ॥७०॥ तारांतरं परं द्वादश सहस्राणि शते
द्विचत्वारिंशच्च ॥७१॥ चन्द्रसूर्या द्विचतुर्द्वादश जम्ब्वादिषु ॥७२॥ ततस्त्रिगुणाः पूर्वयुताः ॥७३॥ पञ्चदशचतुरशीतिशतं मण्डलानि
॥७४॥ जम्ब्वां शतेऽशीते पञ्च पञ्चषष्टिः ॥७५॥ समयशतत्र्यप्रदेशैर्वालाग्रैः पल्यमुद्धारादद्धाक्षेत्राख्यं ॥७६॥ पनकासङ्ख्येयगुण-
खण्डैः सूक्ष्मम् ॥७७॥ दश कोटाकोट्यः सागरः ॥७८॥ सार्धद्वयोद्धारसागरसमयमाना द्वीपाब्धयः ॥७९॥ द्वात्रिंशदष्टाविंशति-
द्वादशाष्टचतुर्लक्षपञ्चाशच्चत्वारिंशत्षट्सहस्रचतुस्त्र्येकादशसप्ताधिकशतपञ्च विमाना ऊर्ध्वलोके ॥८०॥ एकद्वारप्राकारावृता वृत्ताः
॥८१॥ चतुर्द्वाराः सर्वतो वेदिकाश्चतुरस्राः ॥८२॥ त्रिद्वारा वृत्तचतुरस्राऽसत्रवेदिकाप्राकारावृताः त्र्यस्राः ॥८३॥ मृगमहिषवराहसिंहा-
जदर्दुरहयगजभुजगखड्गिवृषभविडिमाङ्काः ॥८४॥ चतुरशीत्यशीतिद्विसप्ततिसप्ततिषष्टिपञ्चाशच्चत्वारिंशत्त्रिंशद्विंशतिदशसहस्राः
सामानिकाः ॥८५॥ द्वित्रित्रिशेषा घनोदधिघनवातोभयाकाशप्रतिष्ठाः ॥८६॥ द्वयोर्द्वात्रिंशच्छतयोजनानि पृथ्वीविमानबाहल्यं ॥८७॥

विष्कम्भवर्गदशगुणमूल परिधिः ॥११६॥ पादगुणोऽसौ गणितपदं ॥११७॥ वीपुपृथक्त्वचतुर्गुणेषुगुणमूलं जीवा ॥११८॥
इषुवर्गषड्गुणजीवावर्गयुतमूलं धनुः ॥ ११९ ॥ अन्त्येषुजीवागुणचतुर्भक्तवर्गदशगुणमूल प्रतरः ॥ १२० ॥ हिमवच्छिखरिणोः
शतंदृद्धास्त्रिशतादिविष्कम्भा अन्तरद्वीपाः वृत्ताः प्रतिकोणं सप्त ॥ १२१ ॥ पल्यासंख्यांशायुर्योजनदशमांशतनुचतुर्थभोजिचतुः
षष्टिपृष्ठकोन्नाशीतिदिनाऽपत्यपालना युग्मिनः ॥१२२॥ लवण आ पञ्चनवतिसहस्रेभ्यः सहस्रावगाढः सप्तशतोन्नूयः ॥ १२३ ॥
मध्ये शिखा सप्तदश सहस्राणि ॥ १२४ ॥ याम्योत्तरायतौ दशशतपृथुलौ पञ्चशतोच्चौ इषुगिरी धातकीपुष्करार्धयोः ॥ १२५ ॥
स्वपराभासि ज्ञान प्रमाण ॥ १२६ ॥ अनाक्षेप एकधर्मको वक्ताभिप्रायो नयः ॥ १२७ ॥ उपशमो मोहे मिश्रो घातिषु क्षयः
सर्वेषु औदयिकपारिणामिकौ च ॥१२८॥ जघन्याऽऽद्यस्याभव्याऽनन्तगुणाणुका वर्गणा ॥१२९॥ सर्वाः स्वानन्तभागवृद्धाः ॥१३०॥
सिद्धानन्तांशाधिका आग्रहणाः ॥ १३१ ॥

भूपेन्द्रप्रतिबोधकृदागमोद्धारकृच्छ्रीमदानंदसागरसूरिरचितं
श्रीतत्त्वार्थसूत्रपरिशिष्टं समाप्तम् ॥ २ ॥

# न्यायावतारमूलम् ॥ ३ ॥

भगवत्सिद्धसेनदिवाकरप्रणीतं

प्रमाणव्युत्पादनार्थमिदमारभ्यते–प्रमाणं स्वपराभासि, ज्ञानं बाधविवर्जितम्। प्रत्यक्षं च परोक्षं च, द्विधा मेयविनिश्चयात् ॥१॥ प्रसिद्धानि प्रमाणानि, व्यवहारश्च तत्कृतः। प्रमाणलक्षणस्योक्तौ, ज्ञायते न प्रयोजनम् ॥२॥ प्रसिद्धानां प्रमाणानां, लक्षणोक्तौ प्रयोजनम्। तद्व्यामोहनिवृत्तिः स्यात्, व्यामूढमनसामिह ॥३॥ अपरोक्षतयाऽर्थस्य, ग्राहकं ज्ञानमीदृशम्। प्रत्यक्षमितरज्ज्ञेयं, परोक्षं ग्रहणेक्षया ॥४॥ साध्याविनाभुवो लिङ्गात्, साध्यनिश्चायकं स्मृतम्। अनुमानं तदभ्रान्तं, प्रमाणत्वात् समक्षवत् ॥५॥ न प्रत्यक्षमपि भ्रान्तं, प्रमाणत्वविनिश्चयात्। भ्रान्तं प्रमाणमित्येतद्विरुद्धं वचनं यतः ॥६॥ सकलप्रतिभासस्य, भ्रान्तत्वासिद्धितः स्फुटम्। प्रमाणं स्वान्यनिश्चायि, द्वयसिद्धौ प्रसिध्यति ॥७॥ दृष्टेष्टाव्याहताद् वाक्यात् परमार्थाभिधायिनः। तत्त्वग्राहितयोत्पन्नं, मानं शाब्दं प्रकीर्तितम् ॥८॥ आप्तोपज्ञमनुल्लङ्घ्यमदृष्टेष्टविरोधकम्। तत्त्वोपदेशकृत् सार्वं, शास्त्रं कापथघट्टनम् ॥९॥ स्वनिश्चयवदन्येषां, निश्चयोत्पादनं बुधैः। परार्थं मानमाख्यातं, वाक्यं तदुपचारतः ॥१०॥ प्रत्यक्षेणानुमानेन, प्रसिद्धार्थप्रकाशनात्। परस्य तदुपायत्वात्, परार्थत्वं द्वयोरपि ॥११॥ प्रत्यक्षप्रतिपन्नार्थप्रतिपादि च यद्वचः। प्रत्यक्षप्रतिभासस्य, निमित्तत्वात् तदुच्यते ॥१२॥ साध्याविनाभुवो हेतोर्वचो यत् प्रतिपादकम्। परार्थमनुमानं तत्, पक्षादिवचनात्मकम् ॥१३॥ साध्याभ्युपगमः पक्षः, प्रत्यक्षाद्यनिराकृतः। तत्प्रयोगोऽत्र कर्तव्यो, हेतोर्गोचरदीपकः ॥१४॥ अन्यथा वाद्यभिप्रेतहेतुगोचरमोहितः। प्रत्याय्यस्य भवेद्धेतुर्विरुद्धारेकितो

यथा ॥१५॥ धानुष्कगुणसम्प्रेक्षिजनस्य परिविध्यतः । धानुष्कस्य विना लक्ष्यनिर्देशेन गुणेतरौ ॥१६॥ हेतोस्तथोपपत्त्या वा,
स्यात् प्रयोगोऽन्यथापि वा । द्विविधोऽन्यतरेणापि, साध्यसिद्धिर्भवेदिति ॥१७॥ साध्यसाधनयोर्व्याप्तिर्यत्र निश्चीयतेतराम् ।
साधर्म्येण स दृष्टान्तः, सम्बन्धस्मरणान्मतः ॥१८॥ साध्ये निवर्त्तमाने तु, साधनस्याप्यसंभवः । ख्याप्यते यत्र दृष्टान्ते, वैधर्म्ये-
णेति स स्मृतः ॥१९॥ अन्तर्व्याप्त्यैव साध्यस्य, सिद्धेर्बहिरुदाहृतिः । व्यर्था स्यात् तदसद्भावेऽप्येवं न्यायविदो विदुः ॥२०॥
प्रतिपाद्यस्य यः सिद्धः, पक्षाभासोऽक्षलिङ्गतः । लोकस्ववचनाभ्यां च, बाधितोऽनेकधा मतः ॥२१॥ अन्यथाऽनुपपन्नत्वं, हेतो-
र्लक्षणमीरितम् । तदप्रतीतिसन्देहविपर्यासैस्तदाभता ॥२२॥ असिद्धस्त्वप्रतीतो यो, योऽन्यथैवोपपद्यते । विरुद्धो योऽन्यथाऽप्यत्र,
युक्तोऽनैकान्तिकः स तु ॥२३॥ साधर्म्येणात्र दृष्टान्ते, दोषा न्यायविदीरिताः । अपलक्षणहेतूत्थाः, साध्यादिविकलादयः ॥२४॥
वैधर्म्येणात्र दृष्टान्ते, दोषा न्यायविदीरिताः । साध्यसाधनयुग्मानामनिवृत्तेश्च संशयात् ॥२५॥ वाद्युक्ते साधने प्रोक्तदोषाणामु-
द्भावनम् । दूषणं निरवद्ये तु, दूषणाभासनामकम् ॥२६॥ सकलावरणमुक्तात्मा, केवलं यत् प्रकाशते । प्रत्यक्षं सकलार्था-
त्मसततप्रतिभासनम् ॥२७॥ प्रमाणस्य फलं साक्षादज्ञानविनिवर्त्तनम् । केवलस्य सुखोपेक्षे, शेपस्यादानहानधीः ॥२८॥ अनेका-
न्तात्मकं वस्तु, गोचरः सर्वसंविदाम् । एकदेशविशिष्टोऽर्थो, नयस्य विपयो मतः ॥२९॥ नयानामेकनिष्ठानां, प्रवृत्तेः श्रुतवर्त्मनि ।
सम्पूर्णार्थविनिश्चायि, स्याद्वादश्रुतमुच्यते ॥३०॥ प्रमाता स्वान्यनिर्भासी, कर्त्ता भोक्ता विवृत्तिमान् । स्वसंवेदनसंसिद्धो, जीवः
क्षित्याद्यनात्मकः ॥३१॥ प्रमाणादिव्यवस्थेयमनादिनिधनात्मिका । सर्वसंव्यवहर्तॄणां, प्रसिद्धापि प्रकीर्तिता ॥३२॥

इति श्रीविक्रमार्कप्रतिबोधकश्रीसिद्धसेनदिवाकरप्रणीतो न्यायावतारः

## अथ श्रीहरिभद्रसूरिकृतान्यष्टकानि ॥ ४ ॥



॥ अथ महादेवाष्टकम् ॥ १ ॥ यस्य संक्लेशजननो, रागो नास्त्येव सर्वथा । न च द्वेषोऽपि सत्त्वेषु, शमेन्धनदवानलः ॥ १ ॥ न च मोहोऽपि सज्ज्ञानच्छादनोऽशुद्धवृत्तकृत् । त्रिलोकख्यातमहिमा, महादेवः स उच्यते ॥ २ ॥ युग्मम् ॥ यो वीतरागः सर्वज्ञो, यः शाश्वतसुखेश्वरः । क्लिष्टकर्मकलातीत, सर्वथा निष्कलस्तथा ॥३॥ यः पूज्यः सर्वदेवानां, यो ध्येयः सर्वयोगिनाम् । यः स्रष्टा सर्वनीतीनां, महादेवः स उच्यते ॥४॥ युग्मम् ॥ एवं सद्वृत्तयुक्तेन, येन शास्त्रमुदाहृतम् । शिववर्त्म परं ज्योतिस्त्रिकोटीदोषवर्जितम् ॥५॥ यस्य चाराधनोपायः, सदाज्ञाभ्यास एव हि । यथाशक्ति विधानेन, नियमात् स फलप्रदः ॥ ६ ॥ सुवैद्यवचनाद्यद्वद्व्याधेर्भवति संक्षयः । तद्वदेव हि तद्वाक्याद् ध्रुवः संसारसंक्षयः ॥ ७ ॥ एवंभूताय शान्ताय, कृतकृत्याय धीमते । महादेवाय सततं, सम्यग्भक्त्या नमो नमः ॥ ८ ॥ ॥ अथ स्नानाष्टकम् ॥ २ ॥ द्रव्यतो भावतश्चैव, द्विधा स्नानमुदाहृतम् । बाह्यमाध्यात्मिकं चेति, तदन्यैः परिकीर्त्यते ॥१॥ जलेन देहदेशस्य, क्षणं यच्छुद्धिकारणम् । प्रायोऽन्यानुपरोधेन, द्रव्यस्नानं तदुच्यते ॥ २ ॥ कृत्वेदं यो विधानेन, देवतातिथिपूजनम् । करोति मलिनारंभी, तस्यैतदपि शोभनम् ॥ ३ ॥ भावशुद्धिनिमित्तत्वात्तथानुभवसिद्धितः । कथञ्चिद्दोषभावेऽपि, तदन्यगुणभावतः ॥४॥ अधिकारिवशात्शास्त्रे, धर्मसाधनसंस्थितिः ।

व्याधिप्रतिक्रियातुल्या, विज्ञेया गुणदोषयोः ॥ ५॥ ध्यानाम्भसा तु जीवस्य, सदा यच्छुद्धिकारणम् । मलं कर्म समाश्रित्य, भावस्नानं तदुच्यते ॥ ६ ॥ ऋषीणामुत्तमं ह्येतन्निर्दिष्टं परमर्षिभिः । हिंसादोषनिवृत्तानां, व्रतशीलविवर्द्धनम् ॥ ७ ॥ स्नात्वाऽनेन यथायोगं, निःशेषमलवर्जितः । भूयो न लिप्यते तेन, स्नातकः परमार्थतः ॥८॥

## ॥ अथ पूजाष्टकम् ॥ ३ ॥

अष्टपुष्पी समाख्याता, स्वर्गमोक्षप्रसाधनी । अशुद्धेतरभेदेन, द्विधा तत्त्वार्थदर्शिभिः ॥ १ ॥ शुद्धागमैर्यथालाभं, प्रत्यग्रैः शुचिभाजनैः । स्तोकैर्वा बहुभिर्वापि, पुष्पैर्जात्यादिसंभवैः ॥२॥ अष्टापायविनिर्मुक्ततदुत्थगुणभूतये । दीयते देवदेवाय, या साऽशुद्धेत्युदाहृता ॥ ३ ॥ संकीर्णैषा स्वरूपेण, द्रव्याद्भावप्रसक्तितः । पुण्यबन्धनिमित्तत्वाद्विज्ञेया स्वर्गसाधनी ॥ ४ ॥ या पुनर्भावजैः पुष्पैः, शास्त्रोक्तिगुणसंगतैः । परिपूर्णत्वतोऽम्लानैरत एव सुगन्धिभिः ॥ ५ ॥ अहिंसा सत्यमस्तेयं, ब्रह्मचर्यमसङ्गता । गुरुभक्तिस्तपो ज्ञानं, सत्पुष्पाणि प्रचक्षते ॥ ६ ॥ एभिर्देवाधिदेवाय, बहुमानपुरःसरा । दीयते पालनाद्या तु, सा वै शुद्धेत्युदाहृता ॥ ७ ॥ प्रशस्तो ह्यनया भावस्ततः कर्मक्षयो ध्रुवः । कर्मक्षयाच्च निर्वाणमत एषा सतां मता ॥८॥

## ॥ अथाऽग्निकारिकाष्टकम् ॥४॥

कर्मेन्धनं समाश्रित्य, दृढा सद्भावनाहुतिः । धर्मध्यानाग्निना कार्या, दीक्षितेनाग्निकारिका ॥ १ ॥ दीक्षा मोक्षार्थमाख्याता, ज्ञानध्यानफलं स च । शास्त्र उक्तो यतः सूत्रं, शिवधर्मोत्तरे ह्यदः ॥ २ ॥ पूजया विपुलं राज्यमग्निकार्येण संपदः । तपः पापविशुद्ध्यर्थं, ज्ञानं ध्यानं च मुक्तिदम् ॥ ३ ॥ पापं च राज्यसंपत्सु, संभवत्यनघं ततः । न तद्धेतोरुपादानमिति सम्यग्विचिन्त्यताम् ॥ ४ ॥ विशुद्धिश्चास्या तपसा, न तु दानादिनैव यत् । तदियं नान्यथा युक्ता, तथा चोक्तं महात्मना ॥५ ॥ धर्मार्थं

यस्य विषेष, तस्यानीहा गरीयसी । प्रक्षालनाद्धि पंकस्य, दूरादस्पर्शनं वरम् ॥ ६ ॥ मोक्षाध्वसेवया चैताः, प्रायः शुभतरा भुवि । जायन्ते ह्यनपायिन्य, इयं सच्छास्त्रसंस्थिति ॥७॥ इष्टापूर्तं न मोक्षांगं, सकामस्योपवर्णितम् । अकामस्य पुनर्योक्ता, सैव न्याय्याऽग्निकारिका ॥८॥ ॥ अथ भिक्षाष्टकम् ॥ ५ ॥ सर्वसंपत्कारी चैका, पौरुषघ्नी तथाऽपरा । वृत्तिभिक्षा च तत्त्वज्ञैरिति भिक्षा त्रिधोदिता ॥१॥ यतिर्ध्यानादियुक्तो यो, गुर्वाज्ञायां व्यवस्थितः । सदाऽनारंभिणस्तस्य, सर्वसंपत्करी मता ॥ २ ॥ वृद्धाद्यर्थमसंगस्य, भ्रमरोपमयाऽटतः । गृहिदेहोपकाराय, विहितेति शुभाशयात् ॥३॥ प्रव्रज्यां प्रतिपन्नो यस्तद्विरोधेन वर्तते । असदारंभिणस्तस्य, पौरुषघ्नीति कीर्तिता ॥४॥ धर्मलाघवकृन्मूढो, भिक्षयोदरपूरणम् । करोति दैन्यात् पीनांग, पौरुषं हन्ति केवलम् ॥ ५ ॥ निःस्वान्धपंगवो ये तु, न शक्ता वै क्रियान्तरे । भिक्षामटन्ति वृत्त्यर्थं, वृत्तिभिक्षेयमुच्यते ॥ ६ ॥ नातिदुष्टाऽपि सामान्यादेषा स्यान्नापि तथा । अनुकम्पानिमित्तत्वात्प्रशस्यकारिणः ॥७॥ दातृणामपि चैताभ्य, फलं क्षेत्रानुसारतः । विज्ञेयमाशयाद्वाऽपि, स विशुद्ध फलप्रदः ॥ ८ ॥ ॥ अथ पिंडाष्टकम् ॥ ६ ॥ अकृतोऽकारितोऽन्यैरसंकल्पित एव च । यते पिंडः समाख्यातो, विशुद्धः शुद्धिकारक ॥१॥ यो न संकल्पितः पूर्वं, देयबुद्ध्या कथं नु तम् । ददाति? कर्मिणश्चैव, स विशुद्धो ह्ययोदितम् ॥ २ ॥ न चैवं सद्गृहस्थानां, भिक्षा ग्राह्या गृहेषु यत् । स्वपरार्थं तु ते यत्नं, कुर्वते नान्यथा क्वचित् ॥ ३ ॥ संकल्पनं विशेषेण, यत्रासौ दुष्ट इत्यपि । परिहारो न सम्यक् स्याद्यावदर्थिकवादिनः ॥ ४ ॥ विषयो वाऽस्य वक्तव्यः पुण्यार्थ-प्रकृतस्य च । असंभवाभिधानात् स्यादाप्तस्यानाप्तताऽन्यथा ॥ ५ ॥ अभ्युपायम्—विविधं देयमाश्रित्य, स्वभोग्याद्यत्र वस्तुनि ।

संकल्पनं क्रियाकाले, तद् दुष्टं विपयोऽनयोः ॥६॥ स्वोचिते तु यदारंभे, तथा सकल्पन कचित् । न दुष्टं शुभभावत्वात्, तच्छुद्धापरयो-
गवत् ॥ ७ ॥ दृष्टोऽसकल्पितस्यापि, लाभ एवमसंभवः । नोक्त इत्याप्ततासिद्धिर्यतिधर्मोऽतिदुष्करः ॥ ८ ॥
॥ अथ प्रच्छन्नभोजनाष्टकम् ॥ ७ ॥ सर्वारंभनिवृत्तस्य, मुमुक्षोर्भावितात्मनः । पुण्यादिपरिहाराय, मतं प्रच्छन्नभोजनम्
॥ १ ॥ भुञ्जानं वीक्ष्य दीनादिर्याचते क्षुत्प्रपीडितः । तस्यानुकम्पया दाने, पुण्यबन्धः प्रकीर्तितः ॥ २ ॥ भवहेतुत्वतश्चायं,
नेष्यते मुक्तिवादिनाम् । पुण्यापुण्यक्षयान्मुक्तिरिति शास्त्रव्यवस्थितेः ॥३॥ प्रायो न चानुकम्पावांस्तस्यादत्त्वा कदाचन । तथा-
विधस्वभावत्वाच्छक्नोति सुखमासितुम् ॥ ४ ॥ अदानेऽपि च दीनादेरप्रीतिर्जायते ध्रुवम् । ततोऽपि शासनद्वेषस्ततः कुगतिस-
न्ततिः ॥५॥ निमित्तभावतस्तस्य, सत्युपाये प्रमादतः । शास्त्रार्थबाधनेनेह, पापबन्ध उदाहृतः ॥६॥ शास्त्रार्थश्च प्रयत्नेन, यथा-
शक्ति मुमुक्षुणा । अन्यव्यापारशून्येन, कर्तव्यः सर्वदैव हि ॥ ७ ॥ एवं ह्युभयथाऽप्येतद्दुष्टं प्रकटभोजनम् । यस्मान्निदर्शितं शास्त्रे,
ततस्त्यागोऽस्य युक्तिमान् ॥ २८ ॥ ॥ अथ प्रत्याख्यानाष्टकम् ॥ ८ ॥ द्रव्यतो भावतश्चैव, प्रत्याख्यानं द्विधा मतम् ।
अपेक्षादिकृतं ह्याद्यमतोऽन्यच्चरमं मतम् ॥१॥ अपेक्षा चाविधिश्चैवापरिणामस्तथैव च । प्रत्याख्यानस्य विघ्नास्तु, वीर्याभावस्तथा-
ऽपरः ॥ २ ॥ लब्ध्याद्यपेक्षया ह्येतदभव्यानामपि कचित् । श्रूयते न च तत्किञ्चिदित्यपेक्षाऽत्र निन्दिता ॥३॥ यथैवाविधिना लोके,
न विद्याग्रहणादि यत् । विपर्ययफलत्वेन, तथेदमपि भाव्यताम् ॥४॥ अक्षयोपशमात् त्यागपरिणामे तथाऽसति । जिनाज्ञाभक्तिसं-
वेगवैकल्यादेतदप्यसत् ॥५॥ उदग्रवीर्यविरहात्, क्लिष्टकर्मोदयेन यत् । बाध्यते तदपि द्रव्यप्रत्याख्यानं प्रकीर्तितम् ॥६॥ एतद्वि-

पर्यायात्र भावप्रत्याख्यानं जिनोदितम् । सम्यक्चारित्ररूपत्वान्नियमान्मुक्तिसाधनम् ॥७॥ जिनोक्तमिति सद्भक्त्या, ग्रहणे द्रव्यतो ऽप्यदः । बाध्यमानं भवेद् भावप्रत्याख्यानस्य कारणम् ॥८॥ ॥ अथ ज्ञानाष्टकम् ॥ ९ ॥ विषयप्रतिभासं चाऽऽत्मपरिणतिमत्तथा । तत्त्वसंवेदनं चैव, ज्ञानमाहुर्महर्षयः ॥१॥ विषकण्टकरत्नादौ, बालादिप्रतिभासवत् । विषयप्रतिभासं स्यात्, तद्धेयत्वाद्यवेदकम् ॥२॥ निरपेक्षप्रवृत्त्यादिलिङ्गमेतदुदाहृतम् । अज्ञानावरणापायं, महापायनिबन्धनम् ॥३॥ पातादिपरतन्त्रस्य, तद्दोषादावसंशयम् । अनर्थाद्याप्तियुक्तं चाऽऽत्मपरिणतिमन्मतम् ॥४॥ तथाविधप्रवृत्त्यादिव्यङ्ग्यं सदनुबन्धि च । ज्ञानावरणह्रासोत्थं, प्रायो वैराग्यकारणम् ॥५॥ स्वस्थवृत्तेः प्रशान्तस्य तद्धेयत्वादिनिश्चयम् । तत्त्वसंवेदनं सम्यग् यथाशक्ति फलप्रदम् ॥६॥ न्याय्यादौ शुद्धवृत्त्यादिगम्यमेतत् प्रकीर्तितम् । सज्ज्ञानावरणापायं, महोदयनिबन्धनम् ॥७॥ एतस्मिन् सततं यत्नः, कुग्रहत्यागतो भृशम् । मार्गश्रद्धादिभावेन, कार्य आगमतत्परैः ॥ ८ ॥ ॥ अथ वैराग्याष्टकम् ॥ १० ॥ आर्तध्यानाख्यमेकं स्यान्मोहगर्भं तथाऽपरम् । सज्ज्ञानसंगतं चेति, वैराग्यं त्रिविधं स्मृतम् ॥१॥ इष्टेतरवियोगादिनिमित्तं प्रायशो हि यत् । यथाशक्त्यपि हेयादावप्रवृत्त्यादिवर्जितम् ॥२॥ उद्वेगकृद्विषादाढ्यमात्मघातादिकारणम् । आर्तध्यानं ह्यदो मुख्यं, वैराग्यं लोकतो मतम् ॥३॥ एको नित्यस्तथाऽबद्धः, क्षय्यसन् वेह सर्वथा । आत्मेति निश्चयाद् भूयो, भवनैर्गुण्यदर्शनात् ॥ ४ तत्त्यागायोपशान्तस्य, सद्वृत्तस्यापि भावतः । वैराग्यं तद्गतं यत्तन् मोहगर्भमुदाहृतम् ॥५॥ भूयांसो नामिनो बद्धा, बाह्येनेच्छादिना ह्यमी । आत्मानस्तद्वशात्कष्टं, भवे तिष्ठन्ति दारुणे ॥६॥ एवं विज्ञाय तत्त्यागो, विधिस्त्यागश्च सर्वथा । वैराग्यमाहुः सज्ज्ञानसंगतं तत्त्वदर्शिनः ॥७॥

एतत्तत्त्वपरिज्ञानान्नियमेनोपजायते । यतोऽतः साधनं सिद्धेरेतदेवोदितं जिनैः ॥ ८ ॥ ॥ अथ तपोऽष्टकम् ॥ ११ ॥
दुःखात्मकं तपः केचिन्मन्यते तन्न युक्तिमत् । कर्मोदयस्वरूपत्वाद्बलीवर्दादिदुःखवत् ॥ १ ॥ सर्व एव च दुःख्येवं, तपस्वी
संप्रसज्यते । विशिष्टस्तद्विशेषेण, सुधनेन धनी यथा ॥ २ ॥ महातपस्विनश्चैव. त्वन्नीत्या नारकादयः । शमसौख्यप्रधानत्वाद्यो-
गिनस्त्वतपस्विनः ॥ ३ ॥ युक्त्यागमबहिर्भूतमतस्त्याज्यमिदं बुधैः । अशस्तध्यानजननात्, प्राय आत्मापकारकम् ॥ ४ ॥ मनइ-
न्द्रिययोगानामहानिश्चोदिता जिनैः । यतोऽत्र तत् कथ न्वस्य, युक्ता स्याद् दुःखरूपता ? ॥५॥ याऽपि चानशनादिभ्यः, कायपीडा
मनाक् क्वचित् । व्याधिक्रियासमा सापि, नेष्टसिद्ध्याऽत्र बाधनी ॥६॥ दृष्टा चेष्टार्थससिद्धौ, कायपीडा ह्यदुःखदा । रत्नादिवणि-
गादीनां, तद्वदत्रापि भाव्यताम् ॥ ७ ॥ विशिष्टज्ञानसवेगशमसारमतस्तपः । क्षायोपशमिकं ज्ञेयमव्याबाधसुखात्मकम् ॥ ८ ॥
॥ अथ वादाष्टकम् ॥ १२ ॥ शुष्कवादो विवादश्च, धर्मवादस्तथाऽपरः । इत्येष त्रिविधो वादः, कीर्तितः परमर्षिभिः
॥१॥ अत्यान्तमानिना सार्धं, क्रूरचित्तेन च दृढम् । धर्मद्विष्टेन मूढेन, शुष्कवादस्तपस्विनः ॥२॥ विजयेऽस्यातिपातादि, लाघवं
तत्पराजयात् । धर्मस्येति द्विधाऽप्येष, तत्त्वतोऽनर्थवर्धनः ॥३॥ लब्धिख्यात्यर्थिना तु स्याद्दुःस्थितेनामहात्मना । छलजातिप्रधानो
यः, स विवाद इति स्मृतः ॥४॥ विजयो ह्यत्र सन्नीत्या, दुर्लभस्तत्त्ववादिनः । तद्भावेऽप्यन्तरायादिदोषो दृष्टविघातकृत् ॥५॥
परलोकप्रधानेन, मध्यस्थेन तु धीमता । स्वशास्त्रज्ञाततत्त्वेन, धर्मवाद उदाहृतः ॥६॥ विजयेऽस्य फलं धर्मप्रतिपत्त्याद्यनिन्दितम् ।
आत्मनो मोहनाशश्च, नियमात्तत्पराजयात् ॥ ७ ॥ देशाद्यपेक्षया चेह, विज्ञाय गुरुलाघवम् । तीर्थकृज्ज्ञातमालोच्य, वादः कार्यो

विषमिता ॥ ८ ॥ ॥ अथ यमाष्टकम् ॥ १३ ॥ भिक्षया धर्मवादस्य, तत्तत्त्वम्प्यपेक्षया । प्रस्तुतार्थोपयोग्येव, धर्मसाध
नलक्षणः ॥ १ ॥ पंचैतानि पवित्राणि, सर्वेषां धर्मचारिणाम् । अहिंसा सत्यमस्तेयं, त्यागो मैथुनवर्जनम् ॥ २ ॥ क खल्वेतानि
युज्यन्ते ?, मुख्यवृत्त्या क्व वा न हि । तंत्रे तत्तन्नीत्यैव, विचार्यं तत्त्वतो ह्यद ॥३॥ धर्मार्थिभिः प्रमाणादेर्लक्षणं न तु युक्तिमत् ।
प्रयोजनाद्यभावेन, तथा चाह महामतिः ॥४॥ प्रसिद्धानि प्रमाणानि, व्यवहारश्च तत्कृतः । प्रमाणलक्षणस्योक्तौ, ज्ञायते न प्रयो
जनम् ॥५॥ प्रमाणेन विनिश्चित्य, तदुच्येत न वा ? ननु । अलक्षितात् कथं युक्ता, न्यायतोऽस्य विनिश्चितिः ? ॥६॥ सत्यां चास्यां
तदुक्त्या किं, ? तद्विषयनिश्चिते । तत एवाविनिश्चित्य, तस्योक्तिर्ध्यान्ध्यमेव हि ॥७॥ तस्मात्ययोदितं वस्तु, विचार्यं रागवर्जितैः ।
धर्मार्थिभिः प्रयत्नेन, तत इष्टार्थसिद्धितः ॥ ८ ॥ अथ नित्यात्मवादनिराकरणाष्टकम् ॥ १४ ॥ तत्रात्मा नित्य
एवेति, येषामेकान्तदर्शनम् । हिंसादयः कथं तेषां, युज्यन्ते मुख्यवृत्तितः ? ॥१॥ निष्क्रियोऽसौ ततो हन्ति, हन्यते वा न जातु
चित् । कंचित्केनचिदित्येवं, न हिंसाऽस्योपपद्यते ॥२॥ अभावे सर्वथैतस्या, अहिंसापि न तत्त्वतः । सत्यादीन्यपि सर्वाणि, नाहिं
सासाधनत्वतः ॥३॥ ततः सन्नीतितोऽभावादमीषामसदेव हि । सर्वं यमाद्यनुष्ठानं, मोहसंगतमेव च ॥ ४ ॥ शरीरेणापि सम्बन्धो,
नात एवास्य संगतः । तथा सर्वगतत्वाच्च, संसारश्चाप्यकल्पितः ॥ ५ ॥ ततश्चोर्ध्वगतिर्धर्मादधोगतिरधर्मतः । ज्ञानान्मोक्षश्च वचनं,
सर्वमेवौपचारिकम् ॥ ६ ॥ भोगाधिष्ठानविषयेऽप्यस्मिन् दोषाऽयमेव तु । तद्भिन्नादेव भोगोऽपि, निष्क्रियस्य कुतो भवेत् ? ॥ ७ ॥
इष्यते चेत्क्रियाऽप्यस्य, सर्वमेवोपपद्यते । मुख्यवृत्त्याऽनघं किं तु, परसिद्धान्तसंश्रय ॥ ८ ॥ अथ क्षणिकत्ववादनिराकरणा–

ष्टकम् ॥ १५ ॥ क्षणिकज्ञानसंतानरूपेऽप्यात्मन्यसंशयम् । हिंसादयो न तत्त्वेन, स्वसिद्धान्तविरोधतः ॥१॥ नाशहेतोरयो-
गेन, क्षणिकत्वस्य संस्थितिः । नाशस्य चान्यतोऽभावे, भवेद्धिंसाऽप्यहेतुका ॥ २ ॥ ततश्चास्याः सदा सत्ता, कदाचिन्नैव वा
भवेत् । कादाचित्कं हि भवनं, कारणोपनिबन्धनम् ॥ ३ ॥ न च सन्तानभेदस्य, जनको हिंसको भवेत् । सांवृतत्वान्न जन्यत्वं,
यस्मादस्योपपद्यते ॥४॥ न च क्षणविशेषस्य, तेनैव व्यभिचारतः । तथा च सोऽप्युपादानभावेन जनको मत. ॥५॥ तस्यापि
हिंसकत्वेन, न कश्चित् स्यादहिंसकः । जनकत्वाविशेषेण, नैवं तद्विरतिः क्वचित् ॥ ६ ॥ उपन्यासश्च शास्त्रेऽस्या, कृतो यत्नेन
चिन्त्यताम् । विषयोऽस्य यमासाद्य, हन्तैष सफलो भवेत् ॥ ७ ॥ अभावेऽस्या न युज्यन्ते, सत्यादीन्यपि तत्त्वतः । अस्याः
सरक्षणार्थं तु, यदेतानि मुनिर्जगौ ॥ ८ ॥ ॥ अथ नित्यानित्याष्टकम् ॥ १६ ॥ नित्यानित्ये तथा देहाद्भिन्नाभिन्ने च
तत्त्वतः । घटन्त आत्मनि न्यायाद्धिंसादीन्यविरोधत ॥१॥ पीडाकर्तृत्वयोगेन, देहव्यापत्त्यपेक्षया । तथा हन्मीतिसंक्लेशाद्धिंसैषा
सनिबन्धना ॥२॥ हिंस्यकर्मविपाकेऽपि, निमित्तत्वनियोगतः । हिंसकस्य भवेदेषा, दुष्टा दुष्टानुबन्धतः ॥३॥ ततः सदुपदेशादेः,
क्लिष्टकर्मवियोगत । शुभभावानुबन्धेन, हन्तास्या विरतिर्भवेत् ॥४॥ अहिंसैषा मता मुख्या, स्वर्गमोक्षप्रसाधनी । एतत्संरक्षणार्थं
च, न्याय्यं सत्यादिपालनम् ॥ ५ ॥ स्मरणप्रत्यभिज्ञानदेहसस्पर्शवेदनात् । अस्य नित्यादिसिद्धिश्च, तथा लोकप्रसिद्धितः ॥ ६ ॥
देहमात्रे च सत्यस्मिन्, स्यात् संकोचादिधर्मिणि । धर्मादेरूर्ध्वगत्यादि, यथार्थं सर्वमेव तु ॥७॥ विचार्यमेतत् सद्बुद्ध्या, मध्यस्थे-
नान्तरात्मना । प्रतिपत्तव्यमेवेति, न खल्वन्यः सता नयः ॥ ८ ॥ अथ मांसभक्षणदूषणाष्टकम् ॥ १७ ॥ भक्षणीयं सता

मांसं, प्राण्यंगत्वेन हेतुना । ओदनादिवदित्येवं, कश्चिदाहातितार्किकः ॥ १ ॥ भक्ष्याभक्ष्यव्यवस्थेह, शास्त्रलोकनिबन्धना । सर्वैव भावतो यस्मात् तस्मादेतदसाम्प्रतम् ॥ २ ॥ तत्र प्राण्यंगमप्येकं, भक्ष्यमन्यत्तु नो तथा । सिद्धं गवादिसत्क्षीररुधिरादौ तथेक्षणात् ॥ ३ ॥ प्राण्यंगत्वेन न च नो, भक्षणीयं त्विदं मतम् । किं त्वन्यजीवभावेन, तथा शास्त्रप्रसिद्धितः ॥ ४ ॥ भिक्षुमांसनिषेधोऽपि, न चैवं युज्यते क्वचित् । अस्थ्याद्यपि च भक्ष्यं स्यात्प्राण्यंगत्वाविशेषतः ॥ ५ ॥ एतावन्मात्रसाम्येन, प्रवृत्तिर्यदि चेष्यते । जायायां स्वजनन्यां च, स्त्रीत्वात्तुल्यैव साऽस्तु ते ॥ ६ ॥ तस्माच्छास्त्रं च लोकं च, समाश्रित्य वदेद् बुधः । सर्वत्रैवं बुधत्वं स्यादन्यथोन्मत्ततुल्यता ॥७॥ शास्त्रे चाप्तेन वोऽप्येतन्निषिद्धं यत्नतो ननु । लंकावतारसूत्रादौ, ततोऽनेन न किंचन ॥८॥

## ॥ अथान्यदर्शनीयशास्त्रोक्तमांसभक्षणदूषणाष्टकम् ॥ १८ ॥

अन्योऽप्यविमृश्य शब्दार्थं, न्याय्यं स्वयमुदीरितम् । पूर्वापरविरुद्धार्थमेवमाहात्र वस्तुनि ॥१॥ न मांसभक्षणे दोषो, न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥ २ ॥ मां स भक्षयिताऽमुत्र, यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं, प्रवदन्ति मनीषिणः ॥ ३ ॥ इत्थंजन्मैव दोषोऽत्र, न शास्त्राद्बाह्यभक्षणम् । प्रतीत्यैव निषेधश्च, न्याय्यो वाच्यान्तराद् गतेः ॥४॥ प्रोक्षितं भक्षयेन्मांसं, ब्राह्मणानां च काम्यया । यथाविधि नियुक्तस्तु, प्राणानामेव वाऽत्यये ॥ ५ ॥ अत्रैवासावदोषश्चेन्निवृत्तिर्नास्य सज्यते । अन्यदाऽभक्षणादत्राभक्षणे दोषकीर्तनात् ॥ ६ ॥ यथाविधि नियुक्तस्तु, यो मांसं नात्ति वै द्विजः । स प्रेत्य पशुतां याति संभवानेकविंशतिम् ॥ ७ ॥ पारिव्राज्यं निवृत्तिश्चेत्तदप्रतिपत्तितः । फलाभावः स एवास्य, दोषो निर्दोषतैव न ॥८॥

## ॥ अथ मद्यपानदूषणाष्टकम् ॥ १९ ॥

मद्यं पुनः प्रमादांगं, तथा सच्चित्तनाशनम् । सन्धानदोषवत्तत्र, न दोष इति साहसम् ॥ १ ॥ किंचेह बहुनोक्तेन?, प्रत्य-
क्षेणैव दृश्यते। दोषोऽस्य वर्तमानेऽपि, तथा भंडनलक्षणः ॥ २ ॥ श्रूयते च ऋषिर्मद्यात्, प्राप्तज्योतिर्महातपाः । स्वर्गाङ्गनाभिरा-
क्षिप्तो, मूर्खवन्निधनं गतः ॥ ३ ॥ कश्चिदृषिस्तपस्तेपे, भीत इन्द्रः सुरस्त्रियः । क्षोभाय प्रेषयामास, तस्यागत्य च तास्तकम् ॥ ४ ॥
विनयेन समाराध्य, वरदाभिमुखं स्थितम् । जगुर्मद्यं तथा हिंसां, सेवस्वाब्रह्म वेच्छया ॥ ५ ॥ स एवं गदितस्ताभिर्द्वयोर्नरकहे-
तुताम् । आलोच्य मद्यरूपं च, शुद्धकारणपूर्वकम् ॥ ६ ॥ मद्यं प्रपद्य तद्भोगान्नष्टधर्मस्थितिर्मदात् । विदंशार्थमजं हत्वा, सर्वमेव
चकार सः ॥ ७ ॥ ततश्च भ्रष्टसामर्थ्यः, स मृत्वा दुर्गतिं गतः । इत्थं दोषाकरो मद्यं, विज्ञेयं धर्मचारिभिः ॥ ८ ॥
॥ अथ मैथुनदूषणाष्टकम् ॥ २० ॥ रागादेव नियोगेन, मैथुनं जायते यतः । ततः कथं न दोषोऽत्र?, येन
शास्त्रे निषिध्यते ॥ १ ॥ धर्मार्थं पुत्रकामस्य, स्वदारेष्वधिकारिणः । ऋतुकाले विधानेन, यत् स्याद्दोषो न तत्र चेत् ॥२॥ नाप-
वादिककल्पत्वान्नैकान्तेनेत्यसंगतम् । वेदं ह्यधीत्य स्नायाद्यदधीत्यैवेति शासितम् ॥३॥ स्नायादेवेति न तु यत्, ततो हीनो गृहा-
श्रमः । तत्र चैतदतो न्यायात्, प्रशंसाऽस्य न युज्यते ॥४॥ अदोषकीर्तनादेव, प्रशंसा चेत् कथं भवेत्? । अर्थापत्त्या सदोषस्य,
दोषाभावप्रकीर्तनात् ॥ ५ ॥ तत्र प्रवृत्तिहेतुत्वात्त्याज्यबुद्धेरसम्भवात् । विध्युक्तेरिष्टसंसिद्धेरुक्तिरेषा न भद्रिका ॥ ६ ॥ प्राणिनां
बाधकं चैतच्छास्त्रे गीतं महर्षिभिः । नलिकातप्तकणकप्रवेशज्ञाततस्तथा ॥ ७ ॥ मूलं चैतदधर्मस्य, भवभावप्रवर्धनम् । तस्माद्विषा-
न्नवत्त्याज्यमिदं मृत्युमनिच्छता ॥ ८ ॥ अथ सूक्ष्मबुद्ध्यष्टकम् ॥ २१ ॥ सूक्ष्मबुद्ध्या सदा ज्ञेयो, धर्मो धर्मार्थि-

मांसं, प्राण्यङ्गत्वेन हेतुना । ओदनादिवदित्येवं, कश्चिदाहातितार्किकः ॥ १ ॥ भक्ष्याभक्ष्यव्यवस्थेह, शास्त्रलोकनिबन्धना । सर्वैव भावतो यस्मात् तस्मादेतदसाम्प्रतम् ॥ २ ॥ तत्र प्राण्यङ्गमप्येकं, भक्ष्यमन्यत्तु नो तथा । सिद्धं गवादिसत्क्षीररुधिरादौ तथेक्षणात् ॥ ३ ॥ प्राण्यङ्गत्वेन न च नो, भक्षणीयं मिदं मतम् । किं त्वन्यजीवभावेन, तथा शास्त्रप्रसिद्धितः ॥ ४ ॥ भिक्षुमांसनिषेधोऽपि, न चैवं युज्यते क्वचित् । अस्थ्याद्यपि च भक्ष्यं स्यात्प्राण्यङ्गत्वाविशेषतः ॥ ५ ॥ एतावन्मात्रसाम्येन, प्रवृत्तिर्यदि चेष्यते । जायायां स्वजनन्यां च, स्त्रीत्वात्तुल्यैव साऽस्तु ते ॥ ६ ॥ तस्माच्छास्त्रं च लोकं च, समाश्रित्य वदेद् बुधः । सर्वत्रैवं बुधत्वं स्यादन्यथोन्मत्ततुल्यता ॥७॥ शास्त्रे चाप्तेन वोऽप्येतन्निषिद्धं यत्नतो ननु । लङ्कावतारसूत्रादौ, ततोऽनेन न किञ्चन ॥८॥

## ॥ अथान्यदर्शनीयशास्त्रोक्तमांसभक्षणदूषणाष्टकम् ॥ १८ ॥

अन्योऽविमृश्य शब्दार्थं, न्याय्यं स्वयमुदीरितम् । पूर्वापरविरुद्धार्थमेवमाहात्र वस्तुनि ॥१॥ न मांसभक्षणे दोषो, न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥ २ ॥ मां स भक्षयिताऽमुत्र, यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं, प्रवदन्ति मनीषिणः ॥ ३ ॥ इत्थं जन्मैव दोषोऽत्र, न शास्त्राद्बाह्यभक्षणम् । प्रतीत्यैव निषेधश्च, न्याय्यो वाक्यान्तराद् गतेः ॥४॥ प्रोक्षितं भक्षयेन्मांसं, ब्राह्मणानां च काम्यया । यथाविधि नियुक्तस्तु, प्राणानामेव वाऽत्यये ॥ ५ ॥ अत्रैवासावदोषश्चेन्निवृत्तिर्नास्य सम्यते । अन्यत्राप्यस्य भावात्प्राग्भक्षणे दोषकीर्तनात् ॥ ६ ॥ यथाविधि नियुक्तस्तु, यो मांसं नात्ति वै द्विजः । स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥ ७ ॥ पारिव्राज्यं निवृत्तिश्चेद्यस्तदप्रतिपत्तितः । फलाभाव: स एवास्य, दोषो निर्दोषतैव न ॥८॥

## ॥ अथ मद्यपानदूषणाष्टकम् ॥ १९ ॥

मद्यं पुनः प्रमादांगं, तथा सच्चित्तनाशनम् । सन्धानदोषवत्तत्र, न दोष इति साहसम् ॥ १ ॥ किंचेह बहुनोक्तेन?, प्रत्य-
क्षेणैव दृश्यते । दोषोऽस्य वर्तमानेऽपि, तथा भंडनलक्षणः ॥ २ ॥ श्रूयते च ऋषिर्मद्यात्, प्राप्तज्योतिर्महातपाः । स्वर्गाङ्गनाभिरा-
क्षिप्तो, मूर्खवन्निधनं गतः ॥ ३ ॥ कश्चिदृषिस्तपस्तेपे, भीत इन्द्रः सुरस्त्रियः । क्षोभाय प्रेषयामास, तस्यागत्य च तास्तकम् ॥ ४ ॥
विनयेन समाराध्य, वरदाभिमुखं स्थितम् । जगुर्मद्यं तथा हिंसां, सेवस्वाब्रह्म वेच्छया ॥ ५ ॥ स एवं गदितस्ताभिर्द्वयोर्नरकहे-
तुताम् । आलोच्य मद्यरूपं च, शुद्धकारणपूर्वकम् ॥ ६ ॥ मद्यं प्रपद्य तद्भोगान्नष्टधर्मस्थितिर्मदात् । विदशार्थमजं हत्वा, सर्वमेव
चकार सः ॥ ७ ॥ ततश्च भ्रष्टसामर्थ्यः, स मृत्वा दुर्गतिं गतः । इत्थं दोषाकरो मद्यं, विज्ञेयं धर्मचारिभिः ॥ ८ ॥

॥ अथ मैथुनदूषणाष्टकम् ॥ २० ॥ रागादेव नियोगेन, मैथुनं जायते यतः । ततः कथं न दोषोऽत्र?, येन
शास्त्रे निषिध्यते ॥ १ ॥ धर्मार्थं पुत्रकामस्य, स्वदारेष्वधिकारिणः । ऋतुकाले विधानेन, यत् स्याद्दोषो न तत्र चेत् ॥२॥ नाप-
वादिककल्पत्वान्नैकान्तेनेत्यसंगतम् । वेदं ह्यधीत्य स्नायाद्यदधीत्यैवेति शासितम् ॥३॥ स्नायादेवेति न तु यत्, ततो हीनो गृहा-
श्रमः । तत्र चैतदतो न्यायात्, प्रशंसाऽस्य न युज्यते ॥४॥ अदोषकीर्तनादेव, प्रशंसा चेत् कथं भवेत्? । अर्थापत्त्या सदोषस्य,
दोषाभावप्रकीर्तनात् ॥ ५ ॥ तत्र प्रवृत्तिहेतुत्वात्त्याज्यबुद्धेरसंभवात् । विध्युक्तेरिष्टसंसिद्धेरुक्तिरेषा न भद्रिका ॥ ६ ॥ प्राणिनां
बाधकं चैतच्छास्त्रे गीतं महर्षिभिः । नलिकातप्तकणकप्रवेशज्ञाततस्तथा ॥ ७ ॥ मूलं चैतदधर्मस्य, भवभावप्रवर्धनम् । तस्माद्विषा-
न्नवत्त्याज्यमिदं मृत्युमनिच्छता ॥ ८ ॥ अथ सूक्ष्मबुद्ध्यष्टकम् ॥ २१ ॥ सूक्ष्मबुद्ध्या सदा ज्ञेयो, धर्मो धर्मार्थि-

र्मिर्नरैः । अन्यथा धर्मबुद्ध्यैव, तद्विघातः प्रसज्यते ॥१॥ गृहीत्वा ग्लानभैषज्यप्रदानाभिग्रहं यथा । तदप्राप्तौ तदन्तेऽस्य, शोकं
समुपगच्छतः ॥ २ ॥ गृहीतोऽभिग्रहः श्रेष्ठो, ग्लानो जातो न च क्वचित् । अहो मेऽधन्यता कष्टं, न सिद्धमभिवाञ्छितम् ॥ ३ ॥
एवं ह्येतत्समादानं, ग्लानभावाभिसन्धिमत् । साधूनां तत्त्वतो यस्मात्, दुष्टं ज्ञेयं महात्मभिः ॥४॥ लौकिकैरपि चैषोऽर्थो, दृष्टः सूक्ष्मा
र्थदर्शिभिः । प्रकारान्तरतः कैश्चित्, यत उक्तमिदं वचः ॥ ५ ॥ अङ्गेष्वेव जरां यातु, यत्त्वयोपकृतं मम । नरः प्रत्युपकाराय, विपत्सु
लभते फलम् ॥ ६ ॥ एवं विरुद्धदानादौ, हीनोत्तमगतेः सदा । प्रव्रज्यादिविधाने च, शास्त्रोक्तन्यायबाधिते ॥ ७ ॥ द्रव्यादि-
भेदतो ज्ञेयो, धर्मव्याघात एव हि । सम्यग्माध्यस्थ्यमाश्रित्य, श्रुतधर्मव्यपेक्षया ॥ ८ ॥ ॥ अथ भावशुद्ध्यष्टकम् ॥ २२ ॥
भावशुद्धिरपि ज्ञेया, यैषा मार्गानुसारिणी । प्रज्ञापनाप्रियाऽत्यर्थं, न पुनः स्वाग्रहात्मिका ॥१॥ रागो द्वेषश्च मोहश्च, भावमालिन्य
हेतवः । एतदुत्कर्षतो ज्ञेयो, हन्तोत्कर्षोऽस्य तत्त्वतः ॥ २ ॥ तथोत्कृष्टे च सत्यस्मिन्, शुद्धिर्वै शब्दमात्रकम् । स्वबुद्धिकल्पना-
शिल्पनिर्मितं नार्थवद्भवेत् ॥ ३ ॥ न मोहोद्रिक्तताऽभावे, स्वाग्रहो जायते क्वचित् । गुणवत्पारतन्त्र्यं हि, तदनुत्कर्षसाधनम् ॥ ४ ॥
अत एवागमज्ञोऽपि, दीक्षादानादिषु ध्रुवम् । क्षमाश्रमणहस्तेनेत्याह सर्वेषु कर्मसु ॥ ५ ॥ इदं तु यस्य नास्त्येव, स नोपायेऽपि
वर्तते । भावशुद्धेः स्वपरयोर्गीतापाक्षस्य सा कुतः ? ॥ ६ ॥ तस्मादसत्समभ्यस्तात् प्रकृत्या शुद्धचेतसः । स्थानमानान्तरज्ञस्य, गुण
वद्बहुमानिनः ॥ ७ ॥ औचित्येन प्रवृत्तस्य, कुग्रहत्यागतो भृशम् । सर्वत्रागमनिष्ठस्य, भावशुद्धिर्यथोदिता ॥ ८ ॥ ॥ अथ
शासनमालिन्यवर्जनाष्टकम् ॥ २३ ॥ यः शासनस्य मालिन्येऽनाभोगेनापि वर्तते । स तन्मिथ्यात्वहेतुत्वादन्येषां प्राणिनां

ध्रुवम् ॥ १ ॥ वध्नात्यपि तदेवालं, परं संसारकारणम् । विपाकदारुणं घोरं, सर्वानर्थविवर्धनम् ॥ २ ॥ यस्तून्नतौ यथाशक्ति, सोऽपि सम्यक्त्वहेतुताम् । अन्येषा प्रतिपद्येह, तदेवाप्नोत्यनुत्तरम् ॥ ३ ॥ प्रक्षीणतीव्रसंक्लेश, प्रशमादिगुणान्वितम् । निमित्तं सर्वसौख्याना. तथा सिद्धिसुखावहम् ॥४॥ अत सर्वप्रयत्नेन, मालिन्यं शासनस्य तु । प्रेक्षावता न कर्तव्यं, प्रधान पापसाधनम् ॥ ५ ॥ अस्माच्छासनमालिन्याज्जातौ जातौ विगर्हितम् । प्रधानभावादात्मानं, सदा दूरीकरोत्यलम् ॥ ६ ॥ कर्तव्या चोन्नतिः सत्या. शक्ताविह नियोगतः । अवन्ध्यबीजमेषा यत्, तत्त्वतः सर्वसपदाम् ॥७॥ अत उन्नतिमाप्नोति, जातौ जातौ हितोदयाम् । क्षय नयति मालिन्यं. नियमात् सर्ववस्तुषु ॥८॥ ॥ अथ पुण्यादिचतुर्भङ्ग्यष्टकम् ॥ २४ ॥ गेहाद् गेहान्तर कश्चिच्छोभनादधिकं नरः । याति यद्वत् सुधर्मेण, तद्वदेव भवाद्भवम् ॥१॥ गेहाद् गेहान्तरं कश्चिच्छोभनादितरन्नरः । याति यद्वदसद्धर्मात्तद्वदेव भवाद्भवम् ॥२॥ गेहाद् गेहान्तरं कश्चिदशुभादधिकं नरः । याति यद्वन्महापापात्तद्वदेव भवाद्भवम् ॥३॥ गेहाद् गेहान्तरं कश्चिदशुभादितरन्नरः । याति यद्वत्सुधर्मेण, तद्वदेव भवाद्भवम् ॥ ४ ॥ शुभानुबन्ध्यतः पुण्यं, कर्तव्यं सर्वथा नरैः । यत्प्रभावादपातिन्यो, जायन्ते सर्वसंपदः ॥ ५ ॥ सदागमविशुद्धेन. क्रियते तच्च चेतसा । एतच्च ज्ञानवृद्धेभ्यो, जायते नान्यतः क्वचित् ॥ ६ ॥ चित्तरत्नमसंक्लिष्टमान्तरं धनमुच्यते । यस्य तन्मुषितं दोषैस्तस्य शिष्टा विपत्तयः ॥ ७ ॥ दया भूतेषु वैराग्यं, विधिवद् गुरुपूजनम् । विशुद्धा शीलवृत्तिश्च, पुण्यं पुण्यानुबन्ध्यदः ॥ ८ ॥ ॥ अथ पितृभक्त्यष्टकम् ॥ २५ ॥ अतः प्रकर्षसंप्राप्ताद्विज्ञेयं फलमुत्तमम् । तीर्थकृत्त्वं सदौचित्यप्रवृत्त्या मोक्षसाधकम् ॥ १ ॥ सदौचित्यप्रवृत्तिश्च, गर्भादारभ्य तस्य यत् । तत्राप्यभिग्रहो

चित्तयोगेन. सर्वस्यैवानुकंपया ॥ ३ ॥ शुभाशयकरं ह्येतदाग्रहच्छेदकारि च । सदभ्युदयसारांगमनुकंपाप्रसूति च ॥ ४ ॥ ज्ञापकं
चात्र भगवान्निष्क्रान्तोऽपि द्विजन्मने । देवदूष्य ददद्धीमाननुकंपाविशेषतः ॥ ५ ॥ इत्थमाशयभेदेन, नातोऽधिकरणं मतम् ।
अपि त्वन्यद् गुणस्थानं, गुणान्तरनिबन्धनम् ॥ ६ ॥ ये तु दानं प्रशंसन्तीत्यादि सूत्रं तु यत् स्मृतम् । अवस्थाभेदविषयं, द्रष्टव्यं
तन् महात्मभिः ॥ ७ ॥ एवं न कश्चिदस्यार्थस्तत्त्वतोऽस्मात्प्रसिध्यति । अपूर्वः किं तु तत्पूर्वमेवं कर्म प्रहीयते ॥ ८ ॥

॥ अथ राज्यादिदानदूषणनिवारणाष्टकम ॥ २८ ॥ अन्यस्त्वाहास्य राज्यादिप्रदाने दोष एव तु । महाधिकरणत्वेन,
तत्त्वमार्गेऽविचक्षणः ॥१॥ अप्रदाने हि राज्यस्य, नायकाभावतो जनाः । मिथो वै कालदोषेण; मर्यादाभेदकारिणः ॥२॥ विन-
श्यंत्यधिकं यस्मादिह लोके परत्र च । शक्तौ सत्यामुपेक्षा च, युज्यते न महात्मनः ॥ ३ ॥ तस्मात्तदुपकाराय, तत्प-
दानं गुणावहम् । परार्थदीक्षितस्यास्य, विशेषेण जगद्गुरोः ॥४॥ एवं विवाहधर्मादौ, तथा शिल्पनिरूपणे । न दोषो ह्युत्तमं पुण्य-
मित्थमेव विभाव्यते ॥५॥ किं चेहाधिकदोषेभ्यः, सत्त्वानां रक्षणं तु यत् । उपकारस्तदेवैषां, प्रवृत्त्यंगं तथाऽस्य च ॥६॥ नागादे
रक्षणं यद्वद्गर्ताद्याकर्षणेन तु । कुर्वन्न दोषवांस्तद्वदन्यथाऽसंभवादयम् ॥७॥ इत्थं चैतदिहेष्टव्यमन्यथा देशनाऽप्यलम् । कुधर्मादिनि-
मित्तत्वाद्, दोषायैव प्रसज्यते ॥८॥ ॥ अथ सामायिकाष्टकम् ॥ २९ ॥ सामायिकं च मोक्षांगं, परं सर्वज्ञभाषितम् ।
वासीचन्दनकल्पानामुक्तमेतन्महात्मनाम् ॥१॥ निरवद्यमिदं ज्ञेयमेकान्तेनैव तत्त्वतः । कुशलाशयरूपत्वात्, सर्वयोगविशुद्धितः ॥२॥
यत्पुनः कुशलं चित्तं, लोकदृष्ट्या व्यवस्थितम् । तत्तथौदार्ययोगेऽपि, चिन्त्यमानं न तादृशम् ॥३॥ मय्येव निपतत्वेतज्जगद्दुश्चरितं

जगत्त्रये ॥५॥ अभव्येषु च भूतार्थो, यदसौ नोपपद्यते । तत् तेषामेव दौर्गुण्यं, ज्ञेयं भगवतो न तु ॥६॥ दृष्टश्चाभ्युदये भानोः, प्रकृत्या क्लिष्टकर्मणाम् । अप्रकाशो ह्युलूकाना, तद्वदत्रापि भाव्यताम् ॥७॥ इयं च नियमाज्ज्ञेया, तथाऽऽनन्दाय देहिनाम् । तदात्वे वर्तमानेऽपि, भव्यानां शुद्धचेतसाम् ॥८॥

**अथ सिद्धस्वरूपाष्टकम् ॥ ३२ ॥**

कृत्स्नकर्मक्षयान् मोक्षो, जन्ममृत्यादिवर्जितः । सर्वबाधाविनिर्मुक्त, एकान्तसुखसंगत ॥१॥ यन्न दुःखेन संभिन्नं, न च भ्रष्टमनन्तरम् । अभिलाषापनीतं यत्, तज्ज्ञेय परमं पदम् ॥ २ ॥ कश्चिदाहान्नपानादिभोगाभावादसंगतम् । सुखं वै सिद्धिनाथानां, प्रष्टव्यः स पुमानिदम् ॥३॥ किंफलोऽन्नादिसंभोगो ?, बुभुक्षादिनिवृत्तये । तन्निवृत्तेः फल किं स्यात् ?, स्वास्थ्यं तेषां तु तत् सदा ॥४॥ अस्वस्थस्यैव भैषज्यं, स्वस्थस्य तु न दीयते । अवाप्तस्वास्थ्यकोटीनां, भोगोऽन्नादेरपार्थकः ॥५॥ अकिंचित्करकं ज्ञेयं, मोहाभावाद्रताद्यपि । तेषां कंड्वाद्यभावेन, हन्त कंडूयनादिवत् ॥६॥ अपरायत्तमौत्सुक्यरहितं निष्प्रतिक्रियम् । सुख स्वाभाविकं तत्र, नित्यं भयविवर्जितम् ॥ ७ ॥ परमानन्दरूपं तद्गीयतेऽन्यैर्विचक्षणैः । इत्थं सकलकल्याणरूपत्वात् सांप्रतं ह्यदः ॥८॥ संवेद्यं योगिनामेतदन्येषां श्रुतिगोचरम् । उपमाऽभावतो व्यक्तमभिधातुं न शक्यते ॥९॥ अष्टकाख्यं प्रकरणं, कृत्वा यत् पुण्यमर्जितम् । विरहात्तेन पापस्य, भवन्तु सुखिनो जनाः ॥१०॥

॥इति श्रीमद्धरिभद्रसूरिपुरन्दरकृतान्यष्टकानि॥

न्यायविशारदन्यायाचार्यश्रीमद्यशोविजयोपाध्यायविरचितं

# ज्ञानसारप्रकरणम्

—

॥ अथ प्रथम पूर्णाष्टकम् ॥ १ ॥ ऐन्द्रश्रीसुखमग्नेन लीलालग्नमिवाखिलम्। सचिदानन्दपूर्णेन, पूर्णं जगदवेक्ष्यते
॥१॥ पूर्णता या परोपाधेः, सा याचितकमण्डनम्। या तु स्वाभाविकी सैव, जात्यरत्नविभानिभा ॥ २ ॥ अवास्तवी विकल्पैः
स्यात् पूर्णताब्धेरिवोर्मिभिः। पूर्णानन्दस्तु भगवान्, स्तिमितोदधिसन्निभः ॥३॥ जागर्ति ज्ञानदृष्टिश्चेत्, तृष्णाकृष्णाहिजाङ्गुली।
पूर्णानन्दस्य तत्किं स्याद्दैन्यवृश्चिकवेदना? ॥४॥ पूर्यन्ते येन कृपणास्तदुपेक्षैव पूर्णता। पूर्णानन्दसुधास्निग्धा, दृष्टिरेषा मनी-
षिणाम् ॥ ५ ॥ अपूर्णः पूर्णतामेति, पूर्यमाणस्तु हीयते। पूर्णानन्दस्वभावोऽयं, जगदद्भुतदायकः ॥६॥ परस्वत्वकृतोन्माथा,
भूनाथा न्यूनतेक्षिणः। स्वस्वत्वसुखपूर्णस्य, न्यूनता न हरेरपि ॥ ७ ॥ कृष्णे पक्षे परिक्षीणे, शुक्ले च समुदञ्चति। द्योतन्ते सक-
लाध्यक्षाः, पूर्णानन्दविधोः कलाः ॥ ८ ॥ अथ द्वितीय मग्नाष्टकम् ॥ २ ॥ प्रत्याहृत्येन्द्रियव्यूहं, समाधाय मनो निजम्।
दधच्चिन्मात्रविश्रान्तिं, मग्न इत्यभिधीयते ॥ १ ॥ यस्य ज्ञानसुधासिन्धुपरब्रह्मणि मग्नता। विषयान्तरसंचारस्तस्य हालाहलोपमः

॥ २ ॥ स्वभावसुखमग्नस्य, जगत्तत्त्वावलोकिनः । कर्तृत्वं नान्यभावाना, साक्षित्वमवशिष्यते ॥ ३ ॥ परब्रह्मणि मग्नस्य, श्लथा
पौद्गलिकीकथा । कामी चामीकरोन्मादाः ?, स्फारा दारादराः क च ? ॥ ४ ॥ तेजोलेश्याविवृद्धिर्या, साधोः पर्यायवृद्धितः ।
भाषिता भगवत्यादौ, सेत्थंभूतस्य युज्यते ॥ ५ ॥ ज्ञानमग्नस्य यच्छर्म, तद्वक्तुं नैव शक्यते । नोपमेयं प्रियाश्लेषैर्नापि तच्चन्दनद्रवैः
॥ ६ ॥ शमशैत्यपुषो यस्य, विप्रुषोऽपि महाकथा । किं स्तुमो ज्ञानपीयूषे, तत्र सर्वाङ्गमग्नताम् ? ॥ ७ ॥ यस्य दृष्टिः कृपावृष्टि-
र्गिरः शमसुधाकिरः । तस्मै नमः शुभज्ञानध्यानमग्नाय योगिने ॥८॥ अथ तृतीयं स्थिराष्टकम् ॥ ३ ॥ वत्स ! किं चञ्च-
लस्वान्तो, भ्रान्त्वा भ्रान्त्वा विषीदसि ? । निधिं स्वसन्निधावेव, स्थिरता दर्शयिष्यति ॥ १ ॥ ज्ञानदुग्धं विनश्येत, लोभविक्षो-
भकूर्चकैः । अम्लद्रव्यादिवास्थैर्यादिति मत्वा स्थिरो भव ॥२॥ अस्थिरे हृदये चित्रा, वाङ्नेत्राकारगोपना । पुंश्चल्या इव कल्या-
णकारिणी न प्रकीर्तिता ॥ ३ ॥ अन्तर्गतं महाशल्यमस्थैर्यं यदि नोद्धृतम् । क्रियौषधस्य को दोषस्तदा गुणमयच्छतः ? ॥ ४ ॥
स्थिरता वाङ्मनःकायैर्येषामङ्गाङ्गितां गता । योगिनः समशीलास्ते, ग्रामेऽरण्ये दिवा निशि ॥५॥ स्थैर्यरत्नप्रदीपश्चेद्दीप्रः सङ्कल्प-
दीपजैः । तद्विकल्पैरलं धूमैरलं धूमैस्तथाऽऽश्रवैः ॥६॥ उदीरयिष्यसि स्वान्तादस्थैर्यपवनं यदि । समाधेर्धर्ममेघस्य, घटां विघटयिष्यसि
॥७॥ चारित्रं स्थिरतारूपमतः सिद्धेष्वपीष्यते । यतन्तां यतयोऽवश्यमस्या एव प्रसिद्धये ॥८॥ अथ मोहत्यागाष्टकम् ॥ ४ ॥
अहं ममेति मन्त्रोऽयं, मोहस्य जगदान्ध्यकृत् । अयमेव हि नञ्पूर्वः, प्रतिमन्त्रोऽपि मोहजित् ॥ १ ॥ शुद्धात्मद्रव्यमेवाहं, शुद्धज्ञानं
गुणो मम । नान्योऽहं न ममान्ये चेत्यदो मोहास्त्रमुल्बणम् ॥२॥ यो न मुह्यति लग्नेषु, भावेष्वौदयिकादिषु । आकाशमिव पङ्केन,

हितोऽप्यहो । तं नाऽऽप्नोति गुण साधुर्यमाप्नोति शमान्वितः ॥५॥ स्वयंभूरमणस्पर्द्धिवर्धिष्णुसमतारसः । मुनिर्येनोपमीयेत, कोऽपि नासौ चराचरे ॥६॥ शमसूक्तसुधासिक्तं, येषां नक्तदिनं मनः । कदापि ते न दह्यन्ते, रागोरगविषोर्मिभिः ॥७॥ गर्जज्ज्ञानगजोत्तुंगरंगद्ध्यानतुरङ्गमाः । जयन्ति मुनिराजस्य, शमसाम्राज्यसंपदः ॥८॥ **अथेन्द्रियजयाष्टकम् ॥७॥** बिभेषि यदि संसारान्मोक्षप्राप्तिं च कांक्षसि । तदेन्द्रियजयं कर्तुं, स्फोरय स्फारपौरुषम् ॥१॥ वृद्धास्तृष्णाजलापूर्णैरालवालैः किलेन्द्रियैः । मूर्छामतुच्छा यच्छन्ति, विकारविषपादपाः ॥२॥ सरित्सहस्रदुष्पूरसमुद्रोदरसोदरः । तृप्तिमान्नेन्द्रियग्रामो, भव तृप्तोऽन्तरात्मना ॥ ३ ॥ आत्मानं विषयैः पाशैर्भववासपराङ्मुखम् । इन्द्रियाणि निबध्नन्ति, मोहराजस्य किङ्कराः ॥ ४ ॥ गिरिमृत्स्नां धनं पश्यन्, धावतीन्द्रियमोहितः । अनादिनिधनं ज्ञानं, धनं पार्श्वे न पश्यति ॥५॥ पुरः पुरः स्फुरत्तृष्णामृगतृष्णानुकारिषु । इन्द्रियार्थेषु धावन्ति, त्यक्त्वा ज्ञानामृतं जडाः ॥ ६ ॥ पतंगभृङ्गमीनेभसारंगा यान्ति दुर्दशाम् । एकैकेन्द्रियदोषाच्चेद्, दुष्टैस्तैः किं न पञ्चभिः ? ॥७॥ विवेकद्विपहर्यक्षैः, समाधिधनतस्करैः । इन्द्रियैर्न जितो योऽसौ, धीराणां धुरि गण्यते ॥ ८ ॥ **अथ त्यागाष्टकम् ॥ ८ ॥** संयमात्मा श्रये शुद्धोपयोगं पितरं निजम् । धृतिमंबां च पितरौ, तन्मा विसृजतं ध्रुवम् ॥ १ ॥ युष्माक सङ्गमोऽनादिर्बन्धवोऽनियतात्मनाम् । ध्रुवैकरूपान् शीलादिबन्धूनित्यधुना श्रये ॥२॥ कान्ता मे समतैवैका, ज्ञातयो मे समक्रियाः । बाह्यवर्गमिति त्यक्त्वा, धर्मसंन्यासवान् भवेत् ॥ ३ ॥ धर्मास्त्याज्याः सुसङ्गोत्थाः, क्षायोपशमिका अपि । प्राप्य चन्दनगन्धाभं, धर्मसंन्यासमुत्तमम् ॥ ४ ॥ गुरुत्वं स्वस्य नोदेति, शिक्षासात्म्येन यावता । आत्मतत्त्वप्रकाशेन, तावत् सेव्यो गुरूत्तमः ॥५॥ ज्ञानाचारादयोऽपीष्टाः, शुद्धस्वस्वपदावधि ।

निर्विकल्पे पुनस्त्यागे, न विकल्पो न च क्रिया ॥ ६ ॥ योगसंन्यासतस्त्यागी, योगानप्यखिलांस्त्यजेत् । इत्येवं निर्गुणं ब्रह्म, परोक्तमुपपद्यते ॥ ७ ॥ वस्तुतस्तु गुणैः पूर्णमनन्तैर्भासते स्वतः । रूपं त्यक्तात्मनः साधोर्निरभ्रस्य विधोरिव ॥ ८ ॥

अथ क्रियागुणाष्टकम् ॥ ९ ॥ ज्ञानी क्रियापरः शान्तो, भावितात्मा जितेन्द्रियः । स्वयं तीर्णो भवाम्भोधेः, परांस्तारयितुं क्षमः ॥१॥ क्रियाविरहितं हन्त, ज्ञानमात्रमनर्थकम् । गतिं विना पथज्ञोऽपि, नाप्नोति पुरमीप्सितम् ॥२॥ स्वानुकूलां क्रियां काले, ज्ञानपूर्णोऽप्यपेक्षते । प्रदीपः स्वप्रकाशोऽपि, तैलपूर्त्यादिकं यथा ॥ ३ ॥ बाह्यभावं पुरस्कृत्य येऽक्रिया व्यवहारतः । वदने कवलक्षेपं, विना ते तृप्तिकाङ्क्षिणः ॥४॥ गुणवद्बहुमानादेर्नित्यस्मृत्या च सत्क्रिया । जातं न पातयेद्भावमजातं जनयेदपि ॥५॥ क्षायोपशमिके भावे, या क्रिया क्रियते तया । पतितस्यापि तद्भावप्रवृद्धिर्जायते पुनः ॥ ६ ॥ गुणवृद्ध्यै ततः कुर्यात्, क्रियामस्खलनाय वा । एकं तु संयमस्थानं, जिनानामवतिष्ठते ॥७॥ वचोऽनुष्ठानतोऽसङ्गा, क्रिया सङ्गतिमङ्गति । सेयं ज्ञानक्रियाभेदभूमिरानन्दपिच्छला ॥ ८ ॥

अथ तृप्त्यष्टकम् ॥ १० ॥ पीत्वा ज्ञानामृतं भुक्त्वा, क्रियासुरलताफलम् । साम्यताम्बूलमास्वाद्य, तृप्तिं याति परां मुनिः ॥१॥ स्वगुणैरेव तृप्तिश्चेदाकालमविनश्वरी । ज्ञानिनो विषयैः किं तैर्यैर्भवेत्तृप्तिरित्वरी ॥२॥ या शान्तैकरसास्वादाद्भवेत्तृप्तिरतीन्द्रिया । सा न जिह्वेन्द्रियद्वारा, षड्रसास्वादनादपि ॥३॥ संसारे स्वप्नवन्मिथ्या, तृप्तिः स्यादाभिमानिकी । तथ्या तु भ्रान्तिशून्यस्य, साऽऽत्मवीर्यविपाककृत् ॥४॥ पुद्गलैः पुद्गलास्तृप्तिं, यान्त्यात्मा पुनरात्मना । परतृप्तिसमारोपो ज्ञानिनस्तन्न युज्यते ॥५॥ मधुराज्यमहाशाका ग्राह्ये बाह्ये च गोरसात् । परब्रह्मणि तृप्तिर्या, जनास्तां जानतेऽपि न ॥६॥ विषयोर्मिविषोद्गारः, स्यात्

तृप्तस्य पुद्गलैः। ज्ञानतृप्तस्य तु ध्यानसुधोद्गारपरंपरा ॥७॥ सुखिनो विषयातृप्ता, नेन्द्रोपेन्द्रादयोऽप्यहो!। भिक्षुरेकः सुखी लोके, ज्ञानतृप्तो निरञ्जनः ॥ ८ ॥ अथ निर्लेपाष्टकम् ॥ ११ ॥ संसारे निवसन् स्वार्थसज्जः कज्जलवेश्मनि । लिप्यते निखिलो लोको, ज्ञानसिद्धो न लिप्यते ॥१॥ नाहं पुद्गलभावानां, कर्ता कारयिताऽपि न । नानुमंतापि चेत्यात्मज्ञानवान् लिप्यते कथम्? ॥२॥ लिप्यते पुद्गलस्कन्धो, न लिप्ये पुद्गलैरहम् । चित्रं व्योमाञ्जनेनेव, ध्यायन्निति न लिप्यते ॥ ३ ॥ लिप्तताज्ञानसंपातप्रतिघाताय केवलम् । निर्लेपज्ञानमग्नस्य, क्रिया सर्वोपयुज्यते ॥४॥ तपःश्रुतादिना मत्तः, क्रियावानपि लिप्यते । भावनाज्ञानसंपन्नो, निष्क्रियोऽपि न लिप्यते ॥५॥ अलिप्तो निश्चयेनात्मा, लिप्तश्च व्यवहारतः । शुद्ध्यत्यलिप्तया ज्ञानी, क्रियावान् लिप्तया दृशा ॥६॥ ज्ञानक्रियासमावेशः, सहैवोन्मीलने द्वयोः । भूमिकाभेदतस्त्वत्र, भवेदेकैकमुख्यता ॥७॥ सज्ञानं यदनुष्ठानं, न लिप्तं दोषपङ्कतः । शुद्धबुद्धस्वभावाय, तस्मै भगवते नमः ॥ ८ ॥ अथ निःस्पृहाष्टकम् ॥ १२ ॥ स्वभावलाभात् किमपि, प्राप्तव्यं नावशिष्यते । इत्यात्मैश्वर्यसंपन्नो, निःस्पृहो जायते मुनिः ॥१॥ संयोजितकरैः के के, प्रार्थ्यन्ते न स्पृहावहैः?। अमात्रज्ञानपात्रस्य, निःस्पृहस्य तृणं जगत् ॥ २ ॥ छिन्दन्ति ज्ञानदात्रेण, स्पृहाविषलतां बुधाः । मुखशोषं च मूर्छां च, दैन्यं यच्छति यत्फलम् ॥ ३ ॥ निष्कासनीया विदुषा, स्पृहा चित्तगृहाद्बहिः । अनात्मरतिचाण्डाली, सङ्गमङ्गीकरोति या ॥ ४ ॥ स्पृहावन्तो विलोक्यन्ते, लघवस्तृणतूलवत् । महाश्चर्यं तथाप्येते, मज्जन्ति भववारिधौ ॥५॥ गौरवं पौरवन्द्यत्वात्, प्रकृष्टत्वं प्रतिष्ठया। ख्यातिं

हो, चक्रिणो-

ऽप्यधिकं सुखम् ॥ ७ ॥ परस्पृहा महादुःखं, निःस्पृहत्वं महासुखम् । एतदुक्तं समासेन, लक्षणं सुखदुःखयोः ॥ ८ ॥ अथ मुनित्वाष्टकम् ॥ १३ ॥ मन्यते यो जगत्तत्त्वं, स मुनिः परिकीर्तितः । सम्यक्त्वमेव तन्मौनं, मौनं सम्यक्त्वमेव च ॥१॥ आत्माऽऽत्मन्येव यच्छुद्धं, जानात्यात्मानमात्मना । सेयं रत्नत्रये ज्ञप्तिरुच्याचारैकता मुनेः ॥२॥ चारित्रमात्मचरणाज्ज्ञानं वा दर्शनं मुनेः । शुद्धज्ञाननये साध्यं, क्रियालाभात्क्रियानये ॥ ३ ॥ यतः प्रवृत्तिर्न मणौ, लभ्यते वा न तत्फलम् । अतात्त्विकी मणिज्ञप्तिर्मणिश्रद्धा च सा यथा ॥ ४ ॥ तथा यतो न शुद्धात्मस्वभावाचरणं भवेत् । फलं दोषनिवृत्तिर्वा, न तज्ज्ञानं न दर्शनम् ॥ ५ ॥ यथा शोफस्य पुष्टत्वं, यथा वा वध्यमण्डनम् । तथा जानन् भवोन्मादमात्मतृप्तो मुनिर्भवेत् ॥ ६ ॥ सुलभं वागनुच्चारं, मौनमेकेन्द्रियेष्वपि । पुद्गलेष्वप्रवृत्तिस्तु, योगानां मौनमुत्तमम् ॥७॥ ज्योतिर्मयीव दीपस्य, क्रिया सर्वापि चिन्मयी । यस्यानन्यस्वभावस्य, तस्य मौनमनुत्तरम् ॥ ८ ॥ अथ विद्यातत्त्वाष्टकम् ॥ १४ ॥ नित्यशुच्यात्मताख्यातिरनित्याशुच्यनात्मसु । अविद्यातत्त्वधीर्विद्या, योगाचार्यैः प्रकीर्तिता ॥ १ ॥ यः पश्येन्नित्यमात्मानमनित्यं परसङ्गमम् । छलं लब्धुं न शक्नोति, तस्य मोहमलिम्लुचः ॥ २ ॥ तरङ्गतरलां लक्ष्मीमायुर्वायुवदस्थिरम् । अदभ्रधीरनुध्यायेदभ्रवद्भङ्गुरं वपुः ॥ ३ ॥ शुचीन्यप्यशुचीकर्तुं, समर्थेऽशुचिसम्भवे । देहे जलादिना शौचभ्रमो मूढस्य दारुणः ॥ ४ ॥ यः स्नात्वा समताकुण्डे, हित्वा कश्मलजं मलम् । पुनर्न याति मालिन्यं, सोऽन्तरात्मा परः शुचिः ॥ ५ ॥ आत्मबोधो नवः पाशो, देहगेहधनादिषु । यः क्षिप्तोऽप्यात्मना तेषु, स्वस्य बन्धाय जायते ॥ ६ ॥ मिथोयुक्तपदार्थानामसंक्रमचमत्क्रिया । चिन्मात्रपरिणामेन विदुषैवानुभूयते

॥ ७ ॥ अविद्यातिमिरध्वंसे, दृशा विद्याञ्जनस्पृशा । पश्यन्ति परमात्मानमात्मन्येव हि योगिनः ॥ ८ ॥ अथ विवेकाष्टकम्
॥ १५ ॥ कर्म जीवं च संश्लिष्टं, सर्वदा क्षीरनीरवत् । विभिन्नीकुरुते योऽसौ, मुनिहंसो विवेकवान् ॥१॥ देहात्माद्यविवेकोऽयं,
सर्वदा सुलभो भवे । भवकोट्याऽपि तद्भेदविवेकस्त्वतिदुर्लभः ॥ २ ॥ शुद्धेऽपि व्योम्नि तिमिराद्रेखाभिर्मिश्रता यथा । विकारैर्मि-
श्रता भाति, तथाऽऽत्मन्यविवेकत. ॥३॥ यथा योधैः कृतं युद्धं, स्वामिन्येवोपचर्यते । शुद्धात्मन्यविवेकेन, कर्मस्कन्धोर्जितं तथा
॥४॥ इष्टकाद्यपि हि स्वर्णं, पीतोन्मत्तो यथेक्षते । आत्माभेदभ्रमस्तद्वद्देहादावविवेकिनः ॥५॥ इच्छन्नपरमान् भावान्, विवेकाद्रेः
पतत्यधः । परमं भावमन्विच्छन्नाविवेके निमज्जति ॥ ६ ॥ आत्मन्येवात्मनः कुर्याद्यः षट्कारकसंगतिम् । काविवेकज्वरस्यास्य,
वैषम्यं जडमज्जनात् ? ॥ ७ ॥ संयमास्त्रं विवेकेन, शाणेनोत्तेजितं मुनेः । धृतिधारोल्बणं कर्मशत्रुच्छेदक्षमं भवेत् ॥ ८ ॥
अथ माध्यस्थ्याष्टकम् ॥ १६ ॥ स्थीयतामनुपालंभं, मध्यस्थेनान्तरात्मना । कुतर्ककर्करक्षेपस्त्यज्यतां बालचापलम् ॥१॥
मनोवत्सो युक्तिगवीं, मध्यस्थस्यानुधावति । तामाकर्षति पुच्छेन, तुच्छाग्रहमनःकपिः ॥ २ ॥ नयेषु स्वार्थसत्येषु, मोघेषु पर-
चालने । समशीलं मनो यस्य, स मध्यस्थो महामुनिः ॥ ३ ॥ स्वस्वकर्मकृतावेशाः, स्वस्वकर्मभुजो नराः । न रागं नापि च
द्वेषं, मध्यस्थस्तेषु गच्छति ॥ ४ ॥ मनः स्याद्व्यापृतं यावत्परदोषगुणग्रहे । कार्यं व्यग्रं वरं तावन्मध्यस्थेनात्मभावने ॥ ५ ॥
विभिन्ना अपि पन्थानः, समुद्रं सरितामिव । मध्यस्थानां परं ब्रह्म, प्राप्नुवन्त्येकमक्षयम् ॥ ६ ॥ स्वागमं रागमात्रेण, द्वेषमात्रात्
परागमम् । न श्रयामस्त्यजामो वा, किंतु मध्यस्थया दृशा ॥ ७ ॥ मध्यस्थया दृशा सर्वेष्वपुनर्बन्धकादिषु । चारिसंजीवनीचार-

न्यायादाशास्महे हितम् ॥८॥ अथ निर्भयाष्टकम् ॥ १७ ॥ यस्य नास्ति परापेक्षा, स्वभावाद्वैतगामिनः । तस्य किं न
भयभ्रान्तिक्लान्तिसन्तानतानवम् ? ॥१॥ भवसौख्येन किं भूरिभयज्वलनभस्मना ? । सदा भयोज्झितं ज्ञानसुखमेव विशिष्यते ॥२॥
न गोप्यं क्वापि नारोप्यं, हेयं देयं च न क्वचित् । क्व भयेन मुने स्थेयं, ज्ञेयं ज्ञानेन पश्यतः ? ॥३॥ एकं ब्रह्मास्त्रमादाय,
निघ्नन्मोहचमूं मुनिः । बिभेति नैव संग्रामशीर्षस्थ इव नागराट् ॥४॥ मयूरी ज्ञानदृष्टिश्चेत्प्रसर्पति मनोवने । वेष्टनं भयसर्पाणां, न
तदाऽऽनन्दचन्दने ॥५॥ कृतमोहास्त्रवैफल्यं, ज्ञानवर्म बिभर्ति यः । क्व भीस्तस्य क्व वा भङ्गः कर्मसङ्गरकेलिषु ? ॥६॥ तूलवल्लघवो
मूढा भ्रमन्त्यभ्रे भयानिलैः । नैकं रोमापि तैर्ज्ञानगरिष्ठानां तु कम्पते ॥७॥ चित्ते परिणतं यस्य, चारित्रमकुतोभयम् । अखण्डज्ञान
राज्यस्य, तस्य साधोः कुतो भयम् ? ॥८॥ अथानात्मप्रशंसाष्टकम् ॥ १८ ॥ गुणैर्यदि न पूर्णोऽसि, कृतमात्मप्रशंसया ।
गुणैरेवासि पूर्णश्चेत्, कृतमात्मप्रशंसया ॥१॥ श्रेयोद्रुमस्य मूलानि, स्वोत्कर्षाम्भःप्रवाहतः । पुण्यानि प्रकटीकुर्वन्, फलं किं समवा
प्स्यसि ? ॥२॥ आलम्बिता हिताय स्युः, परैः स्वगुणरश्मयः । अहो स्वयं गृहीतास्तु पातयन्ति भवोदधौ ॥३॥ उच्चत्वदृष्टिदोषो
त्थस्वोत्कर्षज्वरशान्तिकम् । पूर्वपुरुषसिंहेभ्यो, भृशं नीचत्वभावनम् ॥४॥ शरीररूपलावण्यग्रामारामधनादिभिः । उत्कर्षः परपर्या-
यैश्चिदानन्दघनस्य कः ? ॥५॥ शुद्धाः प्रत्यात्मसाम्येन, पर्यायाः परिभाविताः । अशुद्धाश्चापकृष्टत्वान्नोत्कर्षाय महामुने ॥६॥
क्षोभं गच्छन् समुद्रोऽपि स्वोत्कर्षपवनेरितः । गुणौघान् बुद्बुदीकृत्य विनाशयसि किं मुधा ? ॥७॥ निरपेक्षानवच्छिन्ना
नन्तचिन्मात्रमूर्तय । योगिनो गलितोत्कर्षापकर्षानल्पकल्पना ॥८॥ अथ तत्त्वदृष्ट्यष्टकम् ॥ १९ ॥ रूपे रूपवती

दृष्टिर्दृष्टा रूपं विमुह्यति । मज्जत्यात्मनि नीरूपे, तत्त्वदृष्टिस्त्वरूपिणी ॥ १ ॥ भ्रमवाटी बहिर्दृष्टिर्भ्रमच्छाया तदीक्षणम्। अभ्रान्तस्तत्त्वदृष्टिस्तु, नास्यां शेते सुखाशया ॥ २ ॥ ग्रामारामादि मोहाय, यद्दृष्टं बाह्यया दृशा । तत्त्वदृष्ट्या तदेवान्तर्नीतं वैराग्यसंपदे ॥ ३ ॥ बाह्यदृष्टेः सुधासारघटिता भाति सुन्दरी । तत्त्वदृष्टेस्तु सा साक्षाद्विण्मूत्रपिठरोदरी ॥ ४ ॥ लावण्यलहरीपुण्यं, वपुः पश्यति बाह्यदृग । तत्त्वदृष्टिः श्वकाकानां, भक्ष्यं कृमिकुलाकुलम् ॥५॥ गजाश्वैर्भूपभवनं, विस्मयाय बहिर्दृश । तत्र श्वभवनात्कोऽपि. भेदस्तत्त्वदृशस्तु न ॥६॥ भस्मना केशलोचेन, वपुर्धृतमलेन वा । महान्तं बाह्यदृग्वेत्ति. चित्साम्राज्येन तत्त्ववित् ॥७॥ न विकाराय विश्वस्योपकारायैव निर्मिताः। स्फुरत्कारुण्यपीयूषवृष्टयस्तत्त्वदृष्टयः ॥ ८ ॥ अथ सर्वसमृद्ध्यष्टकम् ॥ २० ॥

बाह्यदृष्टिप्रचारेषु, मुद्रितेषु महात्मनः । अन्तरेवावभासन्ते, स्फुटाः सर्वाः समृद्धयः ॥ १ ॥ समाधिर्नन्दनं धैर्यं, दंभोलिः समता शची । ज्ञानं महाविमानं च, वासवश्रीरियं मुनेः ॥ २ ॥ विस्तारितक्रियाज्ञानचर्मच्छत्रो निवारयन् । मोहम्लेच्छमहावृष्टिं, चक्रवर्ती न किं मुनि ? ॥ ३ ॥ नवब्रह्मसुधाकुंडनिष्ठाधिष्ठायको मुनिः । नागलोकेशवद्भाति, क्षमां रक्षन् प्रयत्नतः ॥ ४ ॥ मुनिरध्यात्मकैलाशे, विवेकवृषभस्थितः । शोभते विरतिज्ञप्तिगंगागौरीयुतः शिवः ॥ ५ ॥ ज्ञानदर्शनचन्द्रार्कनेत्रस्य नरकच्छिदः । सुखसागरमग्नस्य, किं न्यूनं योगिनो हरेः ? ॥६॥ या सृष्टिर्ब्रह्मणो बाह्या, बाह्यापेक्षावलंबिनी । मुनेः परानपेक्षाऽन्तर्गुणसृष्टिस्ततोऽधिका ॥७॥ रत्नैस्त्रिभिः पवित्रा या, श्रोतोभिरिव जाह्नवी । सिद्धयोगस्य साऽप्यर्हत्पदवी न दवीयसी ॥८॥ अथ कर्मविपाकध्यानाष्टकम् ॥२१॥ दुःखं प्राप्य न दीनः स्यात्, सुखं प्राप्य च विस्मितः। मुनिः कर्मविपाकस्य, फल जानन् शुभाशुभम् ॥१॥

प्रतिश्रोतोऽनुगस्त्वेको, राजहंसो महामुनिः ॥३॥ लोकमालंब्य कर्तव्यं, कृतं बहुभिरेव चेत् । तदा मिथ्यादृशां धर्मो, न त्याज्यः स्यात्कदाचन ॥ ४ ॥ श्रेयोऽर्थिनो हि भूयांसो, लोके लोकोत्तरे च न । स्तोका हि रत्नवणिजः, स्तोकाश्च स्वात्मसाधकाः ॥५॥ लोकसंज्ञाहता हन्त, नीचैर्गमनदर्शनैः । शंसयन्ति स्वसंत्यागमर्मघातमहाव्यथाम् ॥६॥ आत्मसाक्षिकसद्धर्मसिद्धौ किं लोकयात्रया? । तत्र प्रसन्नचन्द्रश्च, भरतश्च निदर्शने ॥७॥ लोकसंज्ञोज्झितः साधुः, परब्रह्मसमाधिमान् । सुखमास्ते गतद्रोहममतामत्सरज्वरः ॥८॥

## अथ शास्त्रदृष्ट्यष्टकम् ॥ २४ ॥

चर्मचक्षुर्भृतः सर्वे, देवाश्चावधिचक्षुषः । सर्वतश्चक्षुषः सिद्धाः, साधवः शास्त्रचक्षुषः ॥ १ ॥ पुरः स्थितानिवोर्ध्वाधस्तिर्यग्लोकविवर्तिनः । सर्वान् भावानवेक्षन्ते ज्ञानिनः शास्त्रचक्षुषा ॥ २ ॥ शासनात्त्राणशक्तेश्च, बुधैः शास्त्रं निरुच्यते । वचनं वीतरागस्य, तत्तु नान्यस्य कस्यचित् ॥३॥ शास्त्रे पुरस्कृते तस्माद्वीतरागः पुरस्कृतः । पुरस्कृते पुनस्तस्मिन्नियमात् सर्वसिद्धयः ॥ ४ ॥ अदृष्टार्थेऽनुधावन्तः, शास्त्रदीपं विना जडाः । प्राप्नुवन्ति परं खेदं, प्रस्खलन्तः पदे पदे ॥ ५ ॥ शुद्धोञ्छाद्यपि शास्त्राज्ञानिरपेक्षस्य नो हितम् । भौतहन्तुर्यथा तस्य, पदस्पर्शनिवारणम् ॥६॥ अज्ञानाहिमहामंत्रं, स्वाच्छन्द्यज्वरलंघनम् । धर्मारामसुधाकुल्यां, शास्त्रमाहुर्महर्षयः ॥७॥ शास्त्रोक्ताचारकर्ता च, शास्त्रज्ञः शास्त्रदेशकः । शास्त्रैकदृग्महायोगी, प्राप्नोति परमं पदम् ॥ ८ ॥

## अथ परिग्रहाष्टकम् ॥२५॥

न परावर्तते राशेर्वक्रता जातु नोज्झति । परिग्रहग्रहः कोऽयं, विडंबितजगत्त्रयः? ॥ १ ॥ परिग्रहग्रहावेशाद्दुर्भाषितरजःकिराम् । श्रूयन्ते विकृताः किं न, प्रलापा लिंगिनामपि? ॥ २ ॥ यस्त्यक्त्वा तृणवद्बाह्यमांतरं च परिग्रहम् । उदास्ते तत्पदाम्भोजं, पर्युपास्ते जगत्त्रयी ॥ ३ ॥ चित्तेऽन्तर्ग्रन्थगहने, बहिर्निर्ग्रन्थता वृथा ।

त्यागात्कञ्चुकमात्रस्य भुजगो न हि निर्विषः ॥४॥ त्यक्ते परिग्रहे साधोः प्रयाति सकलं रजः । पालित्यागे क्षणादेव, सरसः सलिलं यथा ॥५॥ त्यक्तपुत्रकलत्रस्य मूर्च्छामुक्तस्य योगिनः । चिन्मात्रप्रतिबद्धस्य, का पुद्गलनियन्त्रणा ? ॥६॥ चिन्मात्रदीपको गच्छेन्निर्वातस्थानसन्निभैः । निष्परिग्रहतास्थैर्यं, धर्मोपकरणैरपि ॥ ७ ॥ मूर्च्छाछन्नधियां सर्वं, जगदेव परिग्रहः । मूर्च्छया रहितानां तु, जगदेवापरिग्रहः ॥ ८ ॥ अथानुभवाष्टकम् ॥ २६ ॥ सन्ध्येव दिनरात्रिभ्यां, केवलश्रुतयोः पृथक् । बुधैरनुभवो दृष्टः केवलार्कारुणोदयः ॥१॥ व्यापारः सर्वशास्त्राणां, दिक्प्रदर्शन एव हि । पारं तु प्रापयत्येकोऽनुभवो भववारिधेः ॥२॥ अतीन्द्रियं परं ब्रह्म, विशुद्धानुभवं विना । शास्त्रयुक्तिशतेनापि, न गम्यं यद् बुधा जगुः ॥ ३ ॥ ज्ञायेरन् हेतुवादेन पदार्था यद्यतीन्द्रियाः । कालेनैतावता प्राज्ञैः, कृतः स्यात्तेषु निश्चयः ॥४॥ केषां न कल्पनादर्वी, शास्त्रक्षीरान्नगाहिनी । विरलास्तद्रसास्वादविदोऽनुभवजिह्वया ॥५॥ पश्यतु ब्रह्म निर्द्वन्द्वं, निर्द्वन्द्वानुभवं विना । कथं लिपिमयी दृष्टिर्वाङ्मयी वा मनोमयी ? ॥ ६ ॥ न सुषुप्तिरमोहत्वान्नापि च स्वापजागरौ । कल्पनाशिल्पविश्रान्तेस्तुर्यैवानुभवो दशा ॥ ७ ॥ अधिगत्याखिलं शब्दब्रह्म शास्त्रदृशा मुनिः । स्वसंवेद्यं परं ब्रह्मानुभवेनाधिगच्छति ॥८॥ अथ योगाष्टकम् ॥ २७ ॥ मोक्षेण योजनाद्योगः, सर्वोऽप्याचार इष्यते । विशिष्य स्थानवर्णार्थालम्बनैकाग्र्यगोचरः ॥ १ ॥ कर्मयोगद्वयं तत्र, ज्ञानयोगत्रयं विदुः । विरतेष्वेव नियमाद्बीजमात्रं परेष्वपि ॥ २ ॥ कृपानिर्वेदसंवेगप्रशमोत्पत्तिकारिणः । भेदाः प्रत्येकमत्रेच्छाप्रवृत्तिस्थिरसिद्धयः ॥ ३ ॥ इच्छा तद्वत्कथाप्रीति, प्रवृत्तिः पालनं परम् । स्थैर्यं बाधकभीहानिः, सिद्धिरन्यार्थसाधनम् ॥४॥ अर्थालम्बनयोश्चैत्यवन्दनादौ विभावनम् । श्रेयसे योगिनः

स्थानवर्णयोर्यत्र एव च ॥५॥ आलंबनमिह ज्ञेयं, द्विविधं रूप्यरूपि च। अरूपिगुणसायुज्यं, योगोऽनालंबनः परः ॥६॥ स्थानाद्ययोगिनस्तीर्थोच्छेदाद्या-प्रीतिभक्तिवचोऽसङ्गैः, स्थानाद्यपि चतुर्विधम्। तस्मादयोगयोगाप्तेर्मोक्षयोगः क्रमाद्भवेत् ॥ ७ ॥ स्थानाद्ययोगिनस्तीर्थोच्छेदाद्या-लंबनादपि। सूत्रदाने महादोष, इत्याचार्याः प्रचक्षते ॥८॥ अथ नियागाष्टकम् ॥ २८ ॥ यः कर्म हुतवान् दीप्ते, ब्रह्माग्नौ ध्यानधाय्यया। स निश्चितेन यागेन, नियागप्रतिपत्तिमान् ॥१॥ पापध्वंसिनि निष्कामे, ज्ञानयज्ञे रतो भव। सावद्यैः कर्मयज्ञैः किं, भूतिकामनयाऽऽविलैः? ॥ २ ॥ वेदोक्तत्वान्मनःशुद्ध्या, कर्मयज्ञोऽपि योगिनः। ब्रह्मयज्ञ इतीच्छन्तः, श्येनयागं त्यजन्ति किम्? ॥३॥ ब्रह्मयज्ञः परं कर्म, गृहस्थस्याधिकारिण। पूजादि वीतरागस्य, ज्ञानमेव तु योगिनः ॥४॥ भिन्नोद्देशेन विहितं, कर्म कर्मक्षयाक्षमम्। क्लृप्तभिन्नाधिकारं च, पुत्रेष्ट्यादिवदिष्यताम् ॥५॥ ब्रह्मार्पणमपि ब्रह्मयज्ञान्तर्भावसाधनम्। ब्रह्माग्नौ कर्मणो युक्तं, स्वकृतत्वस्मये हुते ॥६॥ ब्रह्मण्यर्पितसर्वस्वो, ब्रह्मदृग्ब्रह्मसाधनः। ब्रह्मणा जुह्वदब्रह्म, ब्रह्मणि ब्रह्मगुप्तिमान् ॥७॥ ब्रह्माध्ययननिष्ठावान्, परब्रह्मसमाहितः। ब्राह्मणो लिप्यते नाघैर्नियागप्रतिपत्तिमान् ॥ ८ ॥ युग्मम् ॥

## अथ भावपूजाष्टकम् ॥ २९ ॥

दयाम्भसा कृतस्नानः, संतोषशुभवस्त्रभृत्। विवेकतिलकभ्राजी, भावनापावनाशयः ॥ १ ॥ भक्तिश्रद्धानघुसृणोन्मिश्रपाटीरजद्रवैः। नवब्रह्मांगतो देवं, शुद्धमात्मानमर्चय ॥ २ ॥ क्षमापुष्पस्रजं धर्मयुग्मं क्षौमद्वयं तथा। ध्यानाभरणसारं च, तदंगे विनिवेशय ॥ ३ ॥ मदस्थानभिदात्यागैर्लिखाग्रे चाष्टमंगलीम्। ज्ञानाग्नौ शुभसंकल्पकाकतुंडं च धूपय ॥४॥ प्राग्धर्मलवणोत्तारं, धर्मसन्न्यासवह्निना। कुर्वन् पूरय सामर्थ्यराजन्नीराजनाविधिम् ॥५॥ स्फुरन्मंगलदीपं च, स्थाप-

वा ॥७॥ मूलोत्तरगुणश्रेणिप्राज्यसाम्राज्यसिद्धये । बाह्यमाभ्यन्तरं चेत्थं, तपः कुर्यान्महामुनिः ॥८॥ अथ सर्वनयाष्टकम् ॥३२॥ धावन्तोऽपि नयाः सर्वे, स्युर्भावे कृतविश्रमाः । चारित्रगुणलीनः स्यादिति सर्वनयाश्रितः ॥१॥ पृथग्नया मिथः पक्षप्रतिपक्षकदर्थिताः । समवृत्ति सुखास्वादी, ज्ञानी सर्वनयाश्रितः ॥२॥ नाप्रमाणं प्रमाणं वा, सर्वमप्यविशेषितम् । विशेषितं प्रमाणं स्यादिति सर्वनयज्ञता ॥३॥ लोके सर्वनयज्ञानां, ताटस्थ्यं वाप्यनुग्रहः । स्यात् पृथग्नयमूढानां, स्मयार्तिर्वाऽतिविग्रहः ॥४॥ श्रेयः सर्वनयज्ञानां, विपुलं धर्मवादतः । शुष्कवादाद्विवादाच्च, परेषां तु विपर्ययः ॥५॥ प्रकाशितं जनानां यैर्मतं सर्वनयाश्रितम् । चित्ते परिणतं चेदं, येषां तेभ्यो नमो नमः ॥६॥ निश्चये व्यवहारे च, त्यक्त्वा ज्ञाने च कर्मणि । एकपाक्षिकविश्लेषमारूढाः शुद्धभूमिकाम् ॥७॥ अमूढलक्ष्याः सर्वत्र, पक्षपातविवर्जिताः । जयन्ति परमानन्दमयाः सर्वनयाश्रयाः ॥ युग्मम् ॥८॥ इति नयाष्टकं ॥३२॥ पूर्णो मग्नः स्थिरोऽमोहो, ज्ञानी शान्तो जितेन्द्रियः । त्यागी क्रियापरस्तृप्तो, निर्लेपो निःस्पृहो मुनिः ॥१॥ विद्याविवेकसंपन्नो, मध्यस्थो भयवर्जितः । अनात्मशंसकस्तत्त्वदृष्टिः सर्वसमृद्धिमान् ॥ २ ॥ ध्याता कर्मविपाकानामुद्विग्नो भववारिधेः । लोकसंज्ञाविनिर्मुक्तः, शास्त्रदृग् निष्परिग्रहः ॥३॥ शुद्धानुभववान् योगी, नियागप्रतिपत्तिमान् । भावार्चाध्यानतपसां, भूमिः सर्वनयाश्रयः ॥४॥ स्पष्टं निष्टंकितं तत्त्वमष्टकैः प्रतिपन्नवान् । मुनिर्महोदयं ज्ञानसारं समधिगच्छति ॥५॥ निर्विकारं निराबाधं, ज्ञानसारमुपेयुषाम् । विनिवृत्तपराशानां, मोक्षोऽत्रैव महात्मनाम् ॥ ६ ॥ चित्तमार्द्रीकृतं ज्ञानसारसारस्वतोर्मिभिः । नाप्नोति तीव्रमोहाग्निप्लोषशोषकदर्थनाम् ॥ ७ ॥ अचिन्त्या कापि साधूनां, ज्ञानसारगरिष्ठता । गतिर्ययोर्ध्वमेव स्यादधः पातः कदापि न ॥ ८ ॥ क्लेशक्षयो हि मण्डूकचूर्णतुल्यः क्रियाकृतः । दग्धतच्चूर्णसदृशो, ज्ञानसारकृतः पुनः ॥ ९ ॥ ज्ञानपूतां परेऽप्याहुः, क्रियां हेमघटोपमाम् । युक्तं तदपि तद्भावं, न तद्भग्नाऽपि

माऽग्रमति ॥१०॥ क्रियाशून्यं च यज्ज्ञानं, ज्ञानशून्या च या क्रिया । अनयोरन्तरं ज्ञेयं, भानुखद्योतयोरिव ॥११॥ चारित्रं विरतिः पूर्णा ज्ञानस्योत्कर्ष एव हि । ज्ञानाद्वैतनये दृष्टिर्देया तद्योगसिद्धये ॥ १२ ॥ सिद्धिं सिद्धपुरे पुरन्दरपुरस्पर्धावहे लब्धवान्, चिद्दीपोऽयमुदारसारमहसा दीपोत्सवे पर्वणि । एतद्भावनभावपावनमनश्चञ्चच्चमत्कारिणा, तैस्तैर्दीपशतैः सुनिश्चयमतैर्नित्योऽस्तु दीपोत्सवः ॥ १३ ॥ कुर्वाविद्धिपपञ्जरातुरमतो चित्तं परेषां विपाकेयोदर्ककुतर्कमूर्च्छितमथान्येषां कुवैराग्यत । संसारार्कमबोधरूपपतितं चास्ते परेषामपि, स्तोकानां तु विकारभाररहितं तज्ज्ञानसाराश्रितम् ॥१४॥ आचार्याद्युपदेशवाक्यपरतो भव्यत्वमासन्नति, दृग्गेहे समयोचिते प्रसरति स्फीते च गीतध्वनौ । पूर्णानन्दघनस्य किं सहजया तद्भाग्यभङ्ग्याऽभवन्नैतद्ग्रन्थमिषात्करग्रहमहश्चित्रं चरित्रश्रियः ? ॥१५॥ मग्नत्वाद्यपविष्टगोचरपदैर्निष्ठेव भूः सर्वतः, संसिक्ता समतादिकैरथ पथि न्यस्ता विवेकस्रजः । अध्यात्मामलपूर्णकामकलशश्चक्रेऽत्र शास्त्रे पुरे, पूर्णानन्दघने पुरं प्रविशति स्वीयं कृतं मङ्गलम् ॥१६॥ गच्छे श्रीविजयादिदेवसुगुरोः स्वच्छे गुणानां गणैः, प्रौढिं प्रौढिमधाम्नि जीतविजयप्राज्ञाः परामैयरुः । तत्सातीर्थ्यभृतां नयादिविजयप्राज्ञोत्तमानां शिशोः, श्रीमन्न्यायविशारदस्य कृतिनामेषा कृतिः प्रीतये ॥१७॥

इति श्रीयथार्थन्यायाचार्यकाशीविबुधविजयावाप्तन्यायविशारदपदविभूषित–
श्रीमद्यशोविजयोपाध्यायविरचितो ज्ञानसार सपूर्ण

# मलधारिश्रीराजशेखरसूरिविरचितः षड्दर्शनसमुच्चयः ॥

॥ ऐँ नमः ॥ नत्वा निजगुरून् भक्त्या, स्मृत्वा वाङ्मयदेवताम् । सर्वदर्शनवक्तव्य, वक्ति श्रीराजशेखरः ॥१॥ धर्मः प्रिय सर्वलोके, तं ब्रूयुर्दर्शनानि षट् । तेषा लिङ्गे च वेषे च, आचारे दैवते गुरौ ॥२॥ प्रमाणतत्त्वयोर्मुक्तौ, तर्के भेदो निरीक्ष्यते । मुक्तिरष्टाङ्ग-योगेनेत्येतत् साधारणं वचः ॥३॥ जैनं साङ्ख्यं जैमिनीयं, यौगं वैशेषिकं तथा । सौगतं दर्शनान्येवं, नास्तिकं तु न दर्शनम् ॥४॥ तत्र जैनमते लिङ्गं, रजोहरणमादिमम् । मुखवस्त्रं च वेषश्च, चोलपट्टादिकः स्मृतः ॥५॥ विस्तारस्त्वोघनिर्युक्तेर्ज्ञेयो वेषादिगोचरः । आचारः पञ्चसमितिगुप्तित्रितयलक्षणः ॥६॥ ईर्याभाषैषणाऽऽदाननिक्षेपोत्सर्गसञ्ज्ञकाः । पञ्चाहुः समितीस्तिस्रो, गुप्तीस्त्रियोगनिग्रहात् ॥७॥ तीर्थङ्कराश्चतुर्युक्ता, विंशतिर्वृषभादयः । क्लिष्टाष्टकर्मनिर्मुक्ताः, केवलज्ञानभास्कराः ॥८॥ महाव्रतधरो धीरः, सर्वागमरहस्यवित् । क्रोधमानादिविजयी, निर्ग्रन्थो गुरुरुच्यते ॥९॥ प्रत्यक्षं च परोक्ष च, द्वे प्रमाणे इह स्मृते । तत्र प्रमेयं स्याद्वादाधिष्ठितं द्रव्यपर्ययम् ॥१०॥ धर्माधर्मौ नभः कालः, पुद्गलश्चेतनस्तथा । द्रव्यषट्कमिदं ख्यातं, तद्भेदास्त्वागमे स्मृता. ॥११॥ जीवाजीवौ तथा पुण्यं.

जिनागमात् ॥ ३० ॥ सम्यग् जैनं मतं ज्ञात्वा, योगेऽष्टाङ्गे रमेत यः । स कर्मलाघवं कृत्वा, लब्धा सौख्यपरम्पराम् ॥ ३१ ॥
इति जैनमतम्॥ अथ साङ्ख्यमतं ब्रूमस्ते त्रिदण्डैकदण्डकाः। कौपीनं वसनं तेषां, धातुरक्ताम्बराश्च ते ॥३२॥ क्षुरमुण्डा एणचर्मासना
द्विजगृहाशनाः। पञ्चग्रासीपराश्चैव, द्वादशाक्षरजापिनः ॥३३॥ ॐ नमो नारायणाय, तद्भक्ताः प्रवदन्त्यदः। प्रणामकाले तेऽप्याहुः,
पदं तत्तु नमोऽन्तकम् ॥३४॥ वीटेति भारते ख्याता, दारवी मुखवस्त्रिका । दयानिमित्तं भूतानां, मुखनिःश्वासरोधिका ॥३५॥
यदाहुस्ते–घ्राणादनुप्रयातेन, श्वासेनैकेन जन्तवः । हन्यन्ते शतशो ब्रह्मन्नणुमात्राक्षरवादिना ॥३६॥ दयार्थं जलजीवानां, गलनं
धारयन्ति ते। शास्त्रेष्वुपदिशन्त्येवं, भक्तानां पुरतः सदा ॥३७॥ षट्त्रिंशदङ्गुलायामं, विंशत्यङ्गुलविस्तृतम् । दृढं गलनकं कुर्याद्,
भूयो जीवान् विशोधयेत् ॥३८॥ म्रियन्ते मिष्टतोयेन, पूतराः क्षारसम्भवाः । क्षारतोयेन तु परे, न कुर्यात् सङ्करं ततः ॥३९॥
लूताऽऽस्यतन्तुगलितैकबिन्दौ सन्ति जन्तवः । सूक्ष्मा भ्रमरमानास्ते, नैव मान्ति त्रिविष्टपे ॥४०॥ कुसुम्भकुङ्कुमाम्भोवन्निचितं
सूक्ष्मजन्तुभिः। न दृढेनापि वस्त्रेण, शक्यं शोधयितुं जलम् ॥४१॥ (**उत्तरमीमांसायां** गलनकविचारोऽयम्)। साङ्ख्या निरीश्वराः
केचित्, केचिदीश्वरदेवताः। ये ते निरीश्वरास्तेऽमी, नारायणपरायणाः ॥४२। विष्णोः प्रतिष्ठां कुर्वन्ति, साङ्ख्यशासनसूरयः।
चैतन्यप्रमुखैः शब्दैस्तेषामाचार्य उच्यते ॥४३॥ प्रत्यक्षमनुमानं च, शाब्दं चेति प्रमात्रयम् । अन्तर्भावोऽत्र शेषाणां, प्रमाणानां
सयुक्तिकः ॥४४॥ अमीषां साङ्ख्यसूरीणां, तत्त्वानां पञ्चविंशतिः। सत्त्वं रजस्तमश्चेति, ज्ञेयं तावद् गुणत्रयम् ॥४५॥ एतेषां या
समाऽवस्था, सा प्रकृतिः किलोच्यते । प्रधानाव्यक्तशब्दाभ्यां, वाच्या नित्यस्वरूपिका ॥४६॥ ततः संजायते बुद्धिर्महानिति
यकोच्यते । अहङ्कारस्ततोऽपि स्यात्, ततः षोडशको गणः ॥४७॥ स्पर्शनं रसनं घ्राणं, चक्षुः श्रोत्रं च पञ्चमम् । पञ्च बुद्धीन्द्रि-

पाण्यादुस्तथा कर्मेन्द्रियाणि च ॥ ४८ ॥ पायूपस्थवच पाणिपादाख्यानि मनस्तथा । अन्यानि पञ्च रूपादितन्मात्राणीति षोडश ॥४९॥ रूपात्तेजो रसादापो, गन्धाद् भूमि: स्वरान्नभः । स्पर्शाद्वायुस्तथा चैवं, पञ्चभ्यः पञ्चभूतकम् ॥५०॥ एवं चतुर्विंशतितत्त्वस्वरूपं, निवेदितं साङ्ख्यमते प्रधानम् । अन्यस्त्वकर्ता विगुणश्च भोक्ता, तत्त्वं पुमान् नित्यचिदभ्युपेतः ॥५१॥ अमूर्तश्चेतनो भोगी, नित्यः सर्वगतोऽक्रियः । अकर्ता निर्गुणः सूक्ष्म, आत्मा कापिलदर्शने ॥५२॥ प्रकृतेर्विरहो मोक्षस्तदभावे स स्वरूपगः । बध्यते मुच्यते चैव, प्रकृतिः पुरुषो न तु ॥५३॥ साङ्ख्यानां मतवक्तारः, कपिलासुरिभार्गवाः । उलूकः पञ्चशिखश्चेश्वरकृष्णस्तु शास्त्रकृत् ॥५४॥ तद्ग्रन्था एतदीया, माठरस्तत्त्वकौमुदी । गौडपादाऽऽत्रेयतन्त्रे, साङ्ख्यसप्ततिरप्यमुक् ॥५५॥ काश्यां माधुर्यमेतेषां, बहवो मासोपवासिकाः । धूम्रमार्गानुगा विप्रा, अर्चिर्मार्गानुगास्त्वमी ॥५६॥ वेदप्रियास्ततो विप्रा, यज्ञमार्गानुगामिनः । हिंसादिवेदविरताः साङ्ख्या अध्यात्मवादिनः ॥५७॥ स्वकीयस्य मतस्यैते, महिमानं प्रचक्षते । यदि साङ्ख्यमते भक्तिस्तदा मुक्तिर्विना क्रियाम् ॥५८॥ उक्तं च माठरप्रान्ते—हस पिब लल खाद मोद नित्यं, भुङ्क्ष्व च भोगान् यथाऽभिलापम्। यदि विदितं ते कपिलमतं तत्, प्राप्स्यसि मोक्षसौख्यमचिरेण ॥५९॥ इति साङ्ख्यमतम् ॥ अथ मीमांसकं ब्रूमो जैमिनीयापराभिधम्। जैमिनीया एकदण्डास्त्रिदण्डा अपि साङ्ख्यवत् ॥६०॥ मीमांसको द्विधा कर्म, ब्रह्ममीमांसकस्तथा । वेदान्ती मन्यते ब्रह्म, कर्म भट्टप्रभाकरौ ॥६१॥ ते धातुरक्तवसना, मृगचर्मोपवेशिकाः । कमण्डलुधरा मुण्डा, मन्त्रं मामाकराश्च ते ॥६२॥ वेदान्तध्यानमध्ये कृमाचारस्वीकृतः । तेषां मते नास्ति देवः सर्वज्ञादिविशेषणः ॥६३॥ तस्मादतीन्द्रियार्थानां, साक्षाद्द्रष्टुरभावतः । नित्येभ्यो वेदवाक्येभ्यो, यथार्थत्वविनिर्णयः ॥६४॥ अत एव पुरा कार्यो, वेदपाठः प्रयत्नतः । ततो धर्मस्य जिज्ञासा, कर्तव्या धर्मसाधनी

॥६५॥ नोदनालक्षणो धर्मो, नोदना तु क्रियां प्रति। प्रवर्त्तकं वचः प्राहुः, स्वःकामोऽग्निं यथा यजेत् ॥६६॥ वेद एव गुरुस्तेषां,
वक्ता कश्चित्परो न हि। ततः स्वय ते संन्यस्तं, संन्यस्तमिति भाषिणः ॥६७॥ यज्ञोपवीतं प्रक्षाल्य, पिवन्ति तज्जल शुचि। एते
साङ्ख्यानुगा येषात्, तत्त्वेऽतिमहती भिदा ॥ ६८ ॥ षट्प्रमाणस्पृशो भाट्टास्तन्नामानि प्रचक्ष्महे। प्रत्यक्षमनुमानं च, शाब्दं
चोपमया सह ॥६९॥ अर्थापत्तिरभावश्च, भाट्टानां षट् प्रमाः स्मृताः। प्रभाकरमते पञ्च, ते ह्यभावं न मन्वते ॥७०॥ एकमेवा-
द्वितीयं स्याद्, ब्रह्म तत्त्वं महाफलम्। प्रपञ्च, स्तम्भकुम्भादिस्तेषां शास्त्रे निरर्थकः ॥ ७१ ॥ मीमांसको द्विजन्मैवेत्यतः
शूद्रान्नवर्जकः। न पौरुषकृता वेदाः, पारम्पर्येण तद्ग्रहात् ॥७२॥ मीमांसकानां चत्वारो, भेदास्तेषु कुटीचरः। बहूदकश्च हंसश्च,
तथा परमहंसकः ॥७३॥ कुटीचरो मठावासी, यजमानपरिग्रही। बहूदको नदीतीरे, स्नातो नैरस्यभैक्ष्यभुक् ॥७४॥ हंसो भ्रमति
देशेषु, तपःशोषितविग्रहः। यः स्यात्परमहंसस्तु, तस्याचारं वदाम्यहम् ॥७५॥ स ईशानीं दिशं गच्छन्, यत्र निष्ठितशक्तिकः।
तत्रानशनमादत्ते, वेदान्तध्यानतत्परः ॥ ७६ ॥ परः पर इहोत्कृष्टो, याज्यास्तेषां तु ब्राह्मणाः। साङ्ख्यवत्प्रकृतेर्भेदाद्, मोक्षो
जीवस्य तन्मते ॥७७॥ **गार्गीयस्मृतिमध्यगाः** श्लोकाः "त्रिदण्डी सशिखो यस्तु, ब्रह्मसूत्री गृहच्युतः। सकृत् पुत्रगृहेऽश्नाति, यो
याति स कुटीचरः ॥७८॥ कुटीचरस्य रूपेण, ब्रह्मभिक्षो जिताशनः। बहूदकः स विज्ञेयो, विष्णुजापपरायणः ॥७९॥ ब्रह्मसूत्र-
शिखाहीनः, कषायाम्बरदण्डभृत्। एकरात्रिं वसेद्ग्रामे, नगरे च त्रिरात्रिकम् ॥८०॥ विप्राणामावसथेषु, विधूमेषु गताग्निषु। ब्रह्मभिक्षां
चरेद्धंसः, कुटिकावासमाचरेत् ॥८१॥ हंसस्य जायते ज्ञानं, तदा स्यात्परमो हि सः। चातुर्वर्ण्यप्रभोक्ता च, स्वेच्छया दण्डभृत्तदा
॥८२॥ प्रपञ्चमिथ्या कठवल्लिका च, ख्यातं जने भागवतं पुराणम्। इत्यादिशास्त्राणि बहूनि तेषां, तत्सम्प्रदायस्तु कृशोऽत्र लोके

अयमेषां विशेषस्तु, यत्प्रजल्पन्ति पर्षदि ॥१०२॥ शैवीं दीक्षां द्वादशाब्दीं, सेवित्वा योऽपि मुञ्चति। दासीदासोऽपि भवति, सोऽपि निर्वाणमृच्छति ॥१०३॥ एतेषु निर्विकारा ये, मीमांसां दर्शयन्ति ते। तत्र पद्यमिदं चास्ति, मोक्षमार्गप्ररूपकम् ॥१०४॥ न स्वर्धुनी न फणिनो न कपालदाम, नेन्दोः कला न गिरिजा न जटा न भस्म। यत्रास्ति नान्यदपि किञ्चिदुपास्महे तद्, रूपं पुराणमुनिशीलितमीश्वरस्य ॥१०५॥ स एव योगिनां सेव्यो, योऽर्वाचीनस्तु योगभाक्। स ध्यायमानो राज्यादिसुखकुब्धैर्निषेव्यते ॥१०६॥ उक्तं च तैः स्वयोगशास्त्रे—वीतरागं स्मरन् योगी, वीतरागत्वमश्नुते। सरागं ध्यायतः पुंसः, सरागत्वं तु निश्चितम् ॥१०७॥ येन येन हि भावेन, युज्यते यन्त्रवाहकः। तेन तन्मयतां याति, विश्वरूपो मणिर्यथा ॥१०८॥ श्रुतानुसारतः मोक्तं, नैयायिकमतं मया। एतेषामेव शास्त्रेभ्यस्तांस्तान् भावान् विदुर्बुधाः ॥१०९॥ एतेषां यजमानस्तु, सुताराहृदयेश्वरः। सत्यवादी हरिश्चन्द्रो, रामलक्ष्मणपूर्वजः॥११०॥ भरटानां व्रतादाने, वर्णव्यक्तिर्न काचन। यस्य पुनः शिवे भक्तिर्व्रती स भरटो भवेत् ॥१११॥ अमीषां सर्वतीर्थेषु, भरटा एव पूजकाः। शेषा नमस्कारकराः, सोऽपि कार्यो न सन्मुखः ॥११२॥ **इति शैवम् ॥** अथ वैशेषिकं ब्रूमः, पाशुपतान्यनामकम्। लिङ्गादि यौगवत्तेषां, ते ते तीर्थंकरा अपि ॥११३॥ वैशेषिकाणां योगेभ्यो, मानतत्त्वगता भिदा। प्रत्यक्षमनुमानं च, मते तेषां प्रमाद्वयम् ॥ ११४ ॥ अवशेषप्रमाणानामन्तर्भावोऽत्र तैर्मतः। तत्त्वानि तु षडेवात्र, द्रव्यप्रभृतिकान्यहो! ॥ ११५ ॥ द्रव्यं गुणास्तथा कर्म, सामान्यं च चतुर्थकम्। विशेषसमवायौ च, तत्त्वषट्कं हि तन्मते ॥ ११६ ॥ तत्र द्रव्यं नवधा भूजलतेजोऽनिलान्तरिक्षाणि। कालदिगात्ममनांसि च गुणः पुनः पञ्चविंशतिधा ॥ ११७ ॥ स्पर्शरसरूपगन्धाः शब्दः सङ्ख्या विभागसंयोगौ। परिमाणं च

पृथक्त्वं तथा परत्वापरत्वे च ॥११८॥ बुद्धिः सुखदुःखेच्छाधर्माधर्मप्रयत्नसंस्काराः । द्वेषः स्नेहगुरुत्वे द्रवत्ववेगौ गुणा एते ॥११९॥
उत्क्षेपावक्षेपावाकुञ्चनकं प्रसारणं गमनम् । पञ्चविधं कर्मैतत् परापरे द्वे तु सामान्ये ॥१२०॥ तत्र परं सत्ताख्यं द्रव्यत्वाद्यपरमथ
विशेषस्तु । निश्चयतो नित्यद्रव्यवृत्तिरन्त्यो विनिर्दिष्टः ॥१२१॥ य इहायुतसिद्धानामाधाराधेयभूतभावानाम् । संबन्ध इहप्रत्ययहेतुः
स च भवति समवायः ॥ १२२ ॥ योगे वैशेषिके तन्त्रे, प्रायः साधारणी क्रिया । आचार्यः शङ्कर इति, नाम भागमित्रापरम्
॥ १२३ ॥ अमीषां तर्कशास्त्राणि, पञ्च सहस्राणि कन्दली । श्रीधराचार्यरचिता, प्रशस्तकरभाष्यकम् ॥१२४॥ तत्र सप्तशतीमान
मूलं तु त्रिशतीमितम् । व्योमशिवाचार्यकृता, टीका व्योमवतीमता ॥१२५॥ सा स्यादेव सहस्राणि, परा तु किरणावली । सा
दृश्यनसंख्या, उदयनात् पञ्चसहस्रिका ॥१२६॥ श्रीवत्साचार्यरचिता, टीका लीलावती मता । साऽपि स्यात् षट् सहस्राणि, एकु
तामेयतन्त्रकम् ॥१२७॥ वसु सप्तति प्युन्थितं, शिष्या मन्दोपमा यत । आधारत्वनवारौ च, भावभिन्नं च ते विदुः ॥१२८॥
जीवस्यात्मन्विको दुःखवियोगो मोक्ष इष्यते । योगानां च यथेत्रोक्त, प्राय साधर्मिका यतः ॥ १२९ ॥ शिवेनोलूकरूपेण,
कणादस्य मुनेः पुरा । मतमेतत् प्रकाशितं, तत औलूक्यमुच्यते ॥१३०॥ अक्षपादेन ऋषिणा, रचितत्वात्तु यौगिकम् । आक्षपादमिति
ख्यातं, प्रायस्तन्त्रं मतद्वयम् ॥१३१॥ इति वैशेषिकम् ॥ अथ बौद्धमतं वक्ष्ये, मौण्ड्य कथितं यथाक्रमम् । लिङ्गं तेषां रक्तवस्त्रं,
वेषः मौनक्रिया बहु ॥१३२॥ धर्मबुद्धसङ्घरूपं, तेषां रत्नत्रयं मतम् । तारा देवी पुनस्तेषां, सर्वविघ्नोपघातिनी ॥१३३॥ सप्त
तीर्थङ्करास्तेषां कण्ठे रेखात्रयाङ्किताः । विपश्यी१ शिखी२ विश्वभूः३, क्रकुच्छन्द४ काञ्चन५ ॥१३४॥ काश्यपश्च सप्तमस्तु

शाक्यसिंहोऽर्कबान्धवः७ । तथा राहलसूः सर्वार्थसिद्धो गौतमान्वयः ॥१३५॥ मायाशुद्धोदनसुतो. देवदत्ताग्रजश्च सः । शौद्धोद-
निधर्मकीर्तिप्रमुखा गुरवो मताः ॥ १३६ ॥ प्रत्यक्षमनुमानं च, द्वे प्रमाणे तु तन्मते । चतुर्णामार्यसत्यानां, दु खादीनां प्ररूपकः
॥ १३७ ॥ सर्वज्ञस्तन्मते बुद्धः, स प्रमेयचतुष्कवाक् । दु खं समुदयो मार्गो, निरोधश्चेति तात्त्विकम् ॥ १३८ ॥ दु खं संसारिणः
स्कन्धास्ते च पञ्च प्रकीर्त्तिताः । विज्ञानं वेदना संज्ञा, संस्कारो रूपमेव च ॥१३९॥ समुदेति यतो लोके, रागादीनां गणोऽखिलः ।
आत्माऽऽत्मीयस्वभावाख्यः, समुदयः स उदाहृतः ॥१४०॥ क्षणिकाः सर्वसंस्कारा. इत्येवं वासना तु या । स मार्ग इह विज्ञेयो,
निरोधो मोक्ष उच्यते ॥ १४१ ॥ सुगताचारलग्नस्य, ज्ञाननिर्मलता हि या । सा मुक्तिर्मन्यते बौद्धैः, कैश्चित् कैश्चिच्चित क्षयः
॥१४२॥ आत्मानं मन्वते नैते, ज्ञानमेव तु मन्वते । भवान्तरे सहचरं, सतानस्थं क्षणक्षयि ॥१४३॥ चत्वारो बौद्धभेदाः स्युर्भ-
क्तिस्तेषां पृथक् पृथक् । काव्यादमुष्माद् ज्ञातव्यास्तन्मतप्रतिपादकात् ॥१४४॥ अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणेष्यते,
प्रत्यक्षेण(क्षो न) हि बाह्यवस्तुविसरः सौत्रान्तिकैराहतः । योगाचारमतानुगैरभिमता साकारबुद्धिः परा. मन्यन्ते बत मध्यमाः
कृतधियः स्वच्छां परां संविदम् ॥ १४५ ॥ तर्कभाषा हेतुबिन्दुर्न्यायबिन्दुस्तथाऽर्चटः । तर्कः कमलशीलश्च, तथा न्यायप्रवेशकः
॥ १४६ ॥ ज्ञानपारमिताद्यास्तु, ग्रन्थाः स्युर्दश तन्मते । प्रासादा वर्तुलास्तेषां, बुद्धदण्ड इति स्मृताः ॥ १४७ ॥ मृद्वी शय्या
प्रातरुत्थाय पेया, मध्ये भक्तं पानकं चापराह्णे । द्राक्षाखण्डं शर्करा चार्द्धरात्रे, मोक्षश्चान्ते शाक्यसिंहेन दृष्टः ॥ १४८ ॥
इति बौद्धमतम् ॥ उक्ता लिङ्गादयो भेदा, दर्शनानां शिवैषिणाम् । तद्विस्तरस्तु न प्रोक्तो, यथाज्ञानमुदीरितः ॥१४९॥ अष्टाङ्ग-

स्पृष्टं, घ्रातमास्वादितं स्मृतम् । इत्येककर्तृका भात्रा, भूतचिद्वादिनः कथम् ? ॥१६८॥ स्वसंवेदनतः सिद्धे, स्वदेहे चेतनात्मनि । परदेहेऽपि तत्सिद्धिरनुमानेन साध्यते ॥ १६९ ॥ बुद्धिपूर्वा क्रिया दृष्टा, स्वदेहेऽन्यत्र तद्गतिः । प्रमाणवलतः सिद्धा, केन नाम निवार्यते ? ॥१७०॥ तत्परलोकिनः सिद्धौ, कर्मबन्धो न दुर्घटः । विचित्राध्यवसायस्य, स हि बन्धात्यनादितः ॥१७१॥ पुण्यपापमयं कर्म, चीयते वाऽपचीयते । तद्वशात् सुखदुःखानि, न तु यादृच्छिकान्यहो ! ॥१७२॥ नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात् । अपेक्षातो हि भावानां, कादाचित्कत्वसम्भवः ॥१७३॥ स्तन्यपानाभिलापो यत्, प्रथमं बालके भवेत् । पूर्वजन्माभ्यासतोऽसौ, तस्मिन् जन्मन्यशिक्षणात् ॥१७४॥ तस्मान्नास्तिकवाक्येषु, रतिः कर्तुं न युज्यते । आत्मा ज्ञानी कर्ममुक्तः, परलोकी च बुध्यताम् ॥ १७५ ॥ स चाष्टाङ्गेन योगेन, कर्मोन्मूल्य समन्ततः । आप्नोति मुक्तिं तत्रोच्चैरानंदं स्वादयत्यहो ! ॥ १७६ ॥ सादिकमनन्तमनुपममव्याबाधं स्वभावज सौख्यम् । प्राप्तः स केवलज्ञानदर्शनो मोदते मुक्तः ॥ १७७ ॥ सर्वथाऽप्यजिघांसूनां, गुरुदेवहितैषिणाम् । अदीर्घमत्सराणां च, मुक्तिरासन्नवर्त्तिनी ॥ १७८ ॥ कालस्वभावनियतिचेतनेतरकर्मणाम् । भवितव्यतया पाके, मुक्तिर्भवति नान्यथा ॥१७९॥ बालावबोधनकृते मलधारिसूरिः, श्रीराजशेखर इति प्रथमानबुद्धिः । सम्यग्गुरोरधिगतोत्तमतर्कशास्त्रः, षड्दर्शनीमिति मनाक् कथयांबभूव ॥१८०॥

॥ इति श्रीराजशेखरसूरिकृतः षड्दर्शनसमुच्चयः ॥

# श्रीमदाचार्यहरिभद्रसूरिविरचित षड्दर्शनसमुच्चय ॥

॥ सद्दर्शनं जिनं नत्वा, वीरं स्याद्वाददेशकम् । सर्वदर्शनवाच्योऽर्थ , संक्षेपेण निगद्यते ॥ १ ॥ दर्शनानि षडेवात्र,
मूलभेदव्यपेक्षया । देवतातत्त्वभेदेन, ज्ञातव्यानि मनीषिभिः ॥२॥ बौद्धं नैयायिकं सांख्यं, जैनं वैशेषिकं तथा । जैमिनीयं च
नामानि, दर्शनानाममून्यहो ॥३॥ तत्र बौद्धमते तावद्देवता सुगतः किल । चतुर्णामार्यसत्यानां, दुःखादीनां प्ररूपकः ॥४॥ दुःखं
संसारिणः स्कन्धास्ते च पंच प्रकीर्तिताः । विज्ञानं वेदना संज्ञा, संस्कारो रूपमेव च ॥ ५ ॥ समुदेति यतो लोके, रागादीनां
गणोऽखिलः । आत्माऽऽत्मीयस्वभावाख्या, समुदायः स सम्मतः ॥६॥ क्षणिकाः सर्वसंस्कारा, इत्येवं वासना तु या । स मार्ग
इति विज्ञेयो, निरोधो मोक्ष उच्यते ॥७॥ पंचेन्द्रियाणि शब्दाद्या, विषयाः पंच मानसम् । धर्मायतनमेतानि, द्वादशायतनानि च
॥८॥ प्रमाणे द्वे च विज्ञेये, तथा सौगतदर्शने । प्रत्यक्षमनुमानं च, सम्यग्ज्ञानं द्विधा यतः ॥९॥ प्रत्यक्षं कल्पनापोढमभ्रांतं तत्र
बुध्यताम् । त्रिरूपाल्लिंगतो लिंगिज्ञानं त्वनुमानसंज्ञितम् ॥१०॥ रूपाणि पक्षधर्मत्वं, सपक्षे विद्यमानता । विपक्षे नास्तिता हेतोरेवं
त्रीणि विभाव्यताम् ॥ ११ ॥ बौद्धराद्धान्तवाच्यस्य संक्षेपोऽयं निवेदितः । नैयायिकमतस्यातः, कथ्यमानो निशम्यताम् ॥ १२ ॥

अक्षपादमते देवः, सृष्टिसंहारकृच्छिवः। विभुर्नित्यैकसर्वज्ञो, नित्यबुद्धिसमाश्रयः ॥१३॥ तत्त्वानि षोडशामुत्र, प्रमाणादीनि तद्यथा। प्रमाणं च प्रमेयं च, संशयश्च प्रयोजनम् ॥१४॥ दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवास्तर्कनिर्णयौ । वादो जल्पो वितंडा च, हेत्वाभासाश्छलानि च ॥१५॥ जातयो निग्रहस्थानान्येषामेवं प्ररूपणा। अर्थोपलब्धिहेतुः स्यात्, प्रमाणं तच्चतुर्विधम् ॥१६॥ प्रत्यक्षमनुमानं चोपमानं शाब्दिकं तथा। तत्रेन्द्रियार्थसंपर्कोत्पन्नमव्यभिचारि च ॥१७॥ व्यवसायात्मकं ज्ञानं, व्यपदेशविवर्जितम् । प्रत्यक्षमनुमानं तु, तत्पूर्वं त्रिविधं भवेत् ॥१८॥ युग्मम् ॥ पूर्ववच्छेषवच्चैव, दृष्टं सामान्यतस्तथा। तत्राद्यं कारणात्कार्यानुमानमिह गीयते ॥१९॥ रोलवगवलव्यालतमालमलिनत्विषः। वृष्टिं व्यभिचरन्तीह, नैवंप्रायाः पयोमुचः ॥२०॥ कार्यात्कारणानुमानं, यच्च तच्छेषवन्मतम्। तथाविधनदीपूरान्मेघो वृष्टो यथोपरि ॥२१॥ यच्च सामान्यतो दृष्टं, तदेवं गतिपूर्विका । पुंसि देशान्तरप्राप्तिर्यथा सूर्येऽपि सा तथा ॥२२॥ प्रसिद्धवस्तुसाधर्म्यादप्रसिद्धस्य साधनम् । उपमानं समाख्यातं, यथा गौर्गवयस्तथा ॥२३॥ शाब्दमाप्तोपदेशस्तु, मानमेवं चतुर्विधम् । प्रमेयं त्वात्मदेहाद्यं, बुद्धीन्द्रियसुखादि च ॥ २४ ॥ किमेतदिति संदिग्ध, प्रत्ययः संशयो मतः । प्रवर्त्तते यदर्थित्वात्तु साध्यं प्रयोजनम् ॥२५॥ दृष्टांतस्तु भवेदेष, विवादविषयो न यः। सिद्धान्तस्तु चतुर्भेदः, सर्वतन्त्रादिभेदतः ॥२६॥ प्रतिज्ञाहेतुदृष्टांतोपनया निगमस्तथा। अवयवाः पंच तर्कः, संशयोपरमे भवेत् ॥२७॥ यथा काकादिसंपातात्, स्थाणुना भाव्यमत्र हि । ऊर्ध्वं संदेहतर्काभ्यां, प्रत्ययो निर्णयो मतः ॥२८॥ आचार्यशिष्ययोः पक्षप्रतिपक्षपरिग्रहात् । या कथाऽभ्यासहेतुः स्यादसौ वाद उदाहृतः ॥२९॥ विजिगीषुकथा या तु, छलजात्यादिदूषणा। स जल्पः सा वितंडा तु, या प्रतिपक्षवर्जिता ॥३०॥ हेत्वाभासा असिद्धाद्याश्छलं कूपो नवोदकः । जातयो दूषणाभासाः, पक्षादिर्दूष्यते न यैः ॥३१॥ निग्रहस्थानमाख्यातं, परो येन निगृह्यते ।

मतिप्रारानिसंन्यासविरापादिमिमदस ॥३२॥ नैयायिकमतस्यैवं, समास कथितोऽधुना। सांख्याभिमतभावानामिदानीमयमुच्यते ॥३३॥ सांख्या निरीश्वराः केचित्, केचिदीश्वरदेवताः । सर्वेषामपि तेषां स्यात्तत्त्वानां पञ्चविंशतिः ॥३४॥ सत्त्वं रजस्तमश्चेति, ज्ञेयं तावद् गुणत्रयम् । प्रसादतापदैन्यादिकार्यलिङ्गं क्रमेण तत् ॥३५॥ एतेषां या समावस्था, सा प्रकृतिः किलोच्यते । प्रधाना व्यक्तशब्दाभ्यां वाच्या नित्यस्वरूपिका ॥ ३६ ॥ ततः संजायते बुद्धिर्महानिति यकोच्यते । अहंकारस्ततोऽपि स्यात्तस्मात् षोडशको गणः ॥३७॥ स्पर्शनं रसनं घ्राणं, चक्षुः श्रोत्रं च पञ्चमम् । पंच बुद्धीन्द्रियाण्याहुस्तथा कर्मेन्द्रियाणि च ॥३८॥ पायूपस्थवचःपाणिपादाख्यानि मनस्तथा । अन्यानि पञ्च रूपादितन्मात्राणीति षोडश ॥३९॥ युग्मम् ॥ रूपात्तेजो रसादापो, गन्धाद् भूमिः स्वरान्नभः । स्पर्शाद्वायुस्तथैवं च, पञ्चभ्यो भूतपञ्चकम् ॥४०॥ एवं चतुर्विंशतितत्त्वरूपं, निवेदितं सांख्यमते प्रधानम् । अन्यस्त्वकर्ता विगुणस्तु भोक्ता, तत्त्वं पुमान्नित्यचिदभ्युपेतः ॥ ४१ ॥ पञ्चविंशतितत्त्वानि, सांख्यस्यैवं भवन्ति च । प्रधाननरयोश्चात्र, वृत्तिः पङ्ग्वन्धयोरिव ॥४२॥ प्रकृतिवियोगो मोक्षः पुरुषस्य बतैतदन्तरज्ञानात् । मानत्रितयं च भवेत् प्रत्यक्षं लैङ्गिकं शाब्दम् ॥४३॥ एवं सांख्यमतस्यापि, समासः कथितोऽधुना । जैनदर्शनसंक्षेपः कथ्यते सुविचारवान् ॥४४॥ जिनेन्द्रो देवता तत्र रागद्वेषविवर्जितः । हतमोहमहामल्लः, केवलज्ञानदर्शनः ॥४५॥ सुरासुरेन्द्रसंपूज्यः, सद्भूतार्थोपदेशकः । कृत्स्नकर्मक्षयं कृत्वा, संप्राप्तः परमं पदम् ॥ ४६ ॥ जीवाजीवौ तथा पुण्यं, पापमाश्रवसंवरौ । बन्धश्च निर्जरामोक्षौ, नव तत्त्वानि तन्मते ॥ ४७ ॥ तत्र ज्ञानादिधर्मेभ्यो, भिन्नाभिन्नो विवृत्तिमान् । शुभाशुभकर्मकर्ता, भोक्ता कर्मफलस्य च ॥४८॥ चैतन्यलक्षणो जीवो, यश्चैतद्विपरीतवान् । अजीवः स समाख्यातः, पुण्यं सत्कर्मपुद्गलाः ॥४९॥ युग्मम् ॥ पापं तद्विपरीतं तु, मिथ्यात्वाद्यास्तु हेतवः । यस्तैर्बन्ध

स विज्ञेय, आश्रवो जिनशासने ॥५०॥ संवरस्तन्निरोधस्तु, वन्धो जीवस्य कर्मणः। अन्योऽन्यानुगमात्मा तु, सवन्धो यो द्वयोरपि
॥५१॥ बद्धस्य कर्मणः शाटो, यस्तु सा निर्जरा मता। आत्यन्तिको वियोगस्तु, देहादेर्मोक्ष उच्यते ॥५२॥ एतानि नव तत्त्वानि,
यः श्रद्धत्ते स्थिराशयः। सम्यक्त्वज्ञानयोगेन, तस्य चारित्रयोग्यता ॥५३॥ तथाभव्यत्वपाकेन, यस्यैतत्त्रितय भवेत्। सम्यग्ज्ञान-
क्रियायोगाज्जायते मोक्षभाजनम् ॥ ५४ ॥ प्रत्यक्ष च परोक्षं च, द्वे प्रमाणे तथा मते। अनन्तधर्मक वस्तु, प्रमाणविषयस्त्विह
॥५५॥ अपरोक्षतयाऽर्थस्य, ग्राहकं ज्ञानमीदृशम्। प्रत्यक्षमितरज्ज्ञेयं, परोक्षं ग्रहणेक्षया ॥५६॥ तेनोत्पादव्ययध्रौव्ययुक्तं यत्सत्त-
दिष्यते। अनन्तधर्मक वस्तु, तेनोक्तं मानगोचरः ॥५७॥ जैनदर्शनसक्षेप, इत्येष कथितोऽनघः। पूर्वापरविघातस्तु, यत्र क्वापि
न विद्यते ॥५८॥ इति जैनमतम् देवताविषये भेदो, नास्ति नैयायिकैः समम्। वैशेषिकाणां तत्त्वे तु, विद्यतेऽसौ निदर्श्यते ॥५९॥ द्रव्यं
गुणास्तथा कर्म, सामान्यं च चतुर्थकम्। विशेषसमवायौ च, तत्त्वषट्कं हि तन्मते ॥६०॥ तत्र द्रव्यं नवधा भूजलतेजोऽनिला-
न्तरिक्षाणि। कालदिगात्ममनांसि च गुणः पुनः पंचविंशतिधा ॥६१॥ स्पर्शरसरूपगन्धाः शब्दः संख्या विभागसंयोगौ। परिमाणं
च पृथक्त्वं तथा परत्वापरत्वे च ॥६२॥ बुद्धिः सुखदुःखमिच्छा धर्माधर्मौ प्रयत्नसंस्कारौ। द्वेषः स्नेहगुरुत्वे द्रवत्ववेगौ गुणा एते
॥६३॥ उत्क्षेपावक्षेपावाकुञ्चनकं प्रसारणं गमनम्। पञ्चविधं कर्मैतत् परापरे द्वे तु सामान्ये ॥६४॥ तत्र परं सत्ताख्यं द्रव्यत्वाद्य-
परमथ विशेषस्तु। निश्चयतो नित्यद्रव्यवृत्तिरन्त्यो विनिर्दिष्टः ॥ ६५ ॥ य इहायुतसिद्धानामाधाराधेयभूतभावानाम्। सम्बन्ध
इहप्रत्ययहेतुः प्रोक्तः स समवायः ॥६६॥ प्रमाणं च द्विधाऽमीषां, प्रत्यक्षं लैङ्गिकं तथा। वैशेषिकमतस्यैवं, संक्षेपः परिकीर्त्तितः

इति वैशेषिकमतम् ॥६७॥ जैमिनीयाः पुनः प्राहुः, सर्वज्ञादिविशेषणः । देवो न विद्यते कोऽपि, यस्य मानं वचो भवेत् ॥६८॥ तस्माद
तीन्द्रियार्थानां, साक्षाद् द्रष्टुरभावतः । नित्येभ्यो वेदवाक्येभ्यो, यथार्थत्वविनिश्चयः ॥६९॥ अत एव पुरा कार्यो, वेदपाठः प्रयत्नतः ।
ततो धर्मस्य जिज्ञासा, कर्तव्या धर्मसाधनी ॥७०॥ नोदनालक्षणो धर्मो नोदना तु क्रियां प्रति । प्रवर्तकं वचः प्राहुः, स्वःकामोऽग्निं
यजेद्यथा ॥७१॥ प्रत्यक्षमनुमानं च, शाब्दं चोपमया सह । अर्थापत्तिरभावश्च, षट् प्रमाणानि जैमिनेः ॥७२॥ तत्र प्रत्यक्षमक्षाणां,
संप्रयोगे सतां सति । आत्मनो बुद्धिजन्मेत्यनुमानं लैङ्गिकं पुनः ॥७३॥ शाब्दं शाश्वतवेदोत्थमुपमानं प्रकीर्तितम् । प्रसिद्धार्थस्य
साधर्म्यादप्रसिद्धस्य साधनम् ॥७४॥ दृष्टार्थानुपपत्त्या तु, कस्याप्यर्थस्य कल्पना । क्रियते यद्बलेनासावर्थापत्तिरुदाहृता ॥७५॥
प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते । वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥७६॥ जैमिनीयमतस्यापि संक्षेपोऽयं निवेदितः ।
एवमास्तिकवादानां, कृतं संक्षेपकीर्तनम् ॥७७॥ इति जैमिनीः ॥ इत्यास्तिकाः । नैयायिकमतादन्ये, भेदं वैशेषिकैः सह । न मन्यन्ते
मते तेषां, पञ्चैवास्तिकवादिनः ॥ ७८ ॥ षड्दर्शनसंख्या तु, पूर्यते तन्मते किल । लोकायतमतक्षेपात्, कथ्यते तेन तन्मतम्
॥७९॥ लोकायता वदन्त्येवं नास्ति जीवो न निर्वृतिः । धर्माधर्मौ न विद्येते, न फलं पुण्यपापयोः ॥८०॥ एतावानेव लोकोऽयं,
यावानिन्द्रियगोचरः । भद्रे ! वृकपदं पश्य यद्वदन्ति बहुश्रुताः ॥८१॥ पिब खाद च जातशोभने !, यदतीतं वरगात्रि ! तन्न ते ।
न हि भीरु ! गतं निवर्तते, समुदयमात्रमिदं कलेवरम् ॥८२॥ किं च पृथ्वी जलं तेजो, वायुर्भूतचतुष्टयम् । चैतन्यभूमिरेतेषां, मानं
त्वक्षजमेव हि ॥८३॥ पृथ्व्यादिभूतसंहत्या, तथा देहादिसंभवः । मदशक्तिः सुराङ्गेभ्यो, यद्वत्तद्वत्स्थितात्मता ॥८४॥ तस्माद् दृष्टपरि-
त्यागाद्यददृष्टे प्रवर्तनम् । लोकस्य तद्विमूढत्वं, चार्वाकाः प्रतिपेदिरे ॥८५॥ साध्यवृत्तिनिवृत्तिभ्यां, या प्रीतिर्जायते जने । निरर्था सा मते

तेषां, सा चाकाशात्परा न हि (धर्मः कामात्परो नहि) ॥८६॥ लोकायतमतेऽप्येवं, संक्षेपोऽयं निवेदित. । अभिधेयतात्पर्यार्थः, पर्यालोच्यः सुबुद्धिभिः ॥८७॥ इति षड्दर्शनसमुच्चयः ॥

॥ इति श्रीहरिभद्रसूरिकृतः षड्दर्शनसमुच्चयः ॥

श्रीवादिदेवसूरिविरचित

# प्रमाणनयतत्त्वालोकालङ्कारः ।

## प्रथमः परिच्छेदः ।

रागद्वेषविजेतारं, ज्ञातारं विश्ववस्तुनः । शक्रपूज्यं गिरामीशं, तीर्थेशं स्मृतिमानये ॥१॥ प्रमाणनयतत्त्वव्यवस्थापनार्थमिदमुपक्रम्यते ॥१॥ स्वपरव्यवसायि ज्ञानं प्रमाणम् ॥ २ ॥ अभिमतानभिमतवस्तुस्वीकारतिरस्कारक्षमं हि प्रमाणमतो ज्ञानमेवेदम्

॥३॥ न वै सन्निकर्षादेरज्ञानस्य प्रामाण्यमुपपन्नं तस्यार्थान्तरस्येव स्वार्थव्यवसितौ साधकतमत्वानुपपत्तेः ॥४॥ न खल्वस्य स्वनिर्णीतौ करणत्वं स्तम्भादेरिवाचेतनत्वात्, नाप्यर्थनिश्चितौ स्वनिश्चितावकरणस्य कुम्भादेरिव तथाप्यकरणत्वात् ॥५॥ तद् व्यवसायस्वभावं समारोपपरिपन्थित्वात् प्रमाणत्वाद्वा ॥६॥ अतस्मिंस्तदध्यवसायः समारोपः ॥ ७ ॥ स विपर्ययसंशयानध्यवसायभेदात् त्रेधा ॥ ८ ॥ विपरीतैककोटिनिष्टङ्कनं विपर्ययः ॥९॥ यथा शुक्तिकायामिदं रजतमिति ॥१०॥ साधकबाधकप्रमाणाभावादनवस्थितानेककोटिसंस्पर्शि ज्ञानं संशयः ॥११॥ यथाऽयं स्थाणुर्वा पुरुषो वेति ॥१२॥ किमित्यालोचनमात्रमनध्यवसायः ॥१३॥ यथा गच्छत्तृणस्पर्शज्ञानम् ॥१४॥ ज्ञानादन्योऽर्थः परः ॥१५॥ स्वस्य व्यवसायः स्वाभिमुख्येन प्रकाशनं बाह्यस्येव तदाभिमुख्येन करिकलभकमहमात्मना जानामीति ॥१६॥ कः खलु ज्ञानस्यालम्बनं बाह्यं प्रतिभातमभिमन्यमानस्तदपि तत्प्रकारं नाभिमन्येत मिहिरालोकवत् ॥१७॥ ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यम् ॥१८॥ तदितरत्त्वप्रामाण्यम् ॥१९॥ तदुभयमुत्पत्तौ परत एव, ज्ञप्तौ तु स्वतः परतश्चेति ॥२०॥

श्रीदेवाचार्यनिर्मिते प्रमाणनयतत्त्वालोकालङ्कारे प्रमाणस्वरूपनिर्णयो नाम प्रथमः परिच्छेदः ॥ १ ॥

## अथ द्वितीय परिच्छेद

तद् द्विभेदं प्रत्यक्षं च परोक्षं च ॥१॥ स्पष्टं प्रत्यक्षम् ॥२॥ अनुमानाद्याधिक्येन विशेषप्रकाशनं स्पष्टत्वम् ॥३॥ तद् द्विप्रकारं सांव्यवहारिकं पारमार्थिकं च ॥४॥ [illegible] नमनिन्द्रियनिबन्धनं च ॥५॥ एतद् द्वितयमवग्रहेहावाय

धारणाभेदादेकशश्चतुर्विकल्पकम् ॥६॥ विषयविषयिसन्निपातानन्तरसमुद्भूतसत्तामात्रगोचरदर्शनाज्जातमाद्यमवान्तरसामान्याकारविशिष्टवस्तुग्रहणमवग्रहः ॥७॥ अवगृहीतार्थविशेषाकाङ्क्षणमीहा ॥८॥ ईहितार्थविशेषनिर्णयोऽवायः ॥९॥ स एव दृढतमावस्थापन्नो धारणा ॥१०॥ संशयपूर्वकत्वादीहायाः संशयाद् भेदः ॥११॥ कथञ्चिदभेदेऽपि परिणामविशेषादेषां व्यपदेशभेदः ॥१२॥ असामस्त्येनाप्युत्पद्यमानत्वेनासङ्कीर्णस्वभावतयाऽनुभूयमानत्वादपूर्वापूर्ववस्तुपर्यायप्रकाशकत्वात् क्रमभावित्वाच्चैते व्यतिरिच्यन्ते ॥१३॥ क्रमोऽप्यमीषामयमेव तथैव संवेदनात् ॥१४॥ एवंक्रमाविर्भूतनिजकर्मक्षयोपशमजन्यत्वाच्च ॥१५॥ अन्यथा प्रमेयानवगतिप्रसङ्गः ॥१६॥ तथाहि-न खल्वदृष्टमवगृह्यते न चानवगृहीतं सन्दिह्यते न चासन्दिग्धमीह्यते न चानीहितमवेयते नाप्यनवेतं धार्यते ॥१७॥ क्वचित् क्रमस्यानुपलक्षणमेषामाशूत्पादादुत्पलपत्रशतव्यतिभेदक्रमवत् ॥ १८ ॥ पारमार्थिकं पुनरुत्पत्तावात्ममात्रापेक्षम् ॥ १९ ॥ तद् विकल सकलं च ॥२०॥ तत्र विकलमवधिमनःपर्यायज्ञानरूपतया द्वेधा ॥२१॥ अवधिज्ञानावरणविलयविशेषसमुद्भवं भवगुणप्रत्ययं रूपिद्रव्यगोचरमवधिज्ञानम् ॥२२॥ संयमविशुद्धिनिबन्धनाद्विशिष्टावरणविच्छेदाज्जातं मनोद्रव्यपर्यायालम्बनं मनःपर्यायज्ञानम् ॥ २३ ॥ सकल तु सामग्रीविशेषसमुद्भूतसमस्तावरणक्षयापेक्षं निखिलद्रव्यपर्यायसाक्षात्कारिस्वरूपं केवलज्ञानम् ॥ २४ ॥ तद्वानर्हन्निर्दोषत्वात् ॥ २५ ॥ निर्दोषोऽसौ प्रमाणाविरोधिवाक्त्वात् ॥ २६ ॥ तदिष्टस्य प्रमाणेनाबाध्यमानत्वात् तद्वाचस्तेनाविरोधसिद्धिः ॥२७॥ नच कवलाहारवत्त्वेन तस्यासर्वज्ञत्वं, कवलाहारसर्वज्ञत्वयोरविरोधात् ॥२८॥

इति प्रत्यक्षस्वरूपनिर्णयो नाम द्वितीयः परिच्छेदः ॥ २ ॥

# अथ तृतीय परिच्छेदः

अस्पष्टं परोक्षं ॥१॥ स्मरणप्रत्यभिज्ञानतर्कानुमानागमभेदतस्तत्पञ्चप्रकारं ॥२॥ तत्र संस्कारप्रबोधसंभूतमनुभूतार्थविषयं तदित्याकारं संवेदनं स्मरणम् ॥३॥ तत्तीर्थकरबिम्बमिति यथा ॥४॥ अनुभवस्मृतिहेतुकं तिर्यगूर्ध्वतासामान्यादिगोचरं सङ्कलनात्मकं ज्ञानं प्रत्यभिज्ञानम् ॥५॥ यथा तज्जातीय एवायं गोपिण्डो गोसदृशो गवयः स एवायं जिनदत्त इत्यादि ॥६॥ उपलम्भानुपलम्भसम्भवं त्रिकालीकलितसाध्यसाधनसम्बन्धाद्यालम्बनमिदमस्मिन् सत्येव भवतीत्याद्याकारं संवेदनमूहापरनामा तर्कः ॥७॥ यथा यावान् कश्चिद् धूमः स सर्वो वह्नौ सत्येव भवतीति तस्मिन्नसत्यसौ न भवत्येवेति ॥८॥ अनुमानं द्विप्रकारं—स्वार्थं परार्थं च ॥९॥ तत्र हेतुग्रहणसम्बन्धस्मरणकारणकं साध्यविज्ञानं स्वार्थम् ॥१०॥ निश्चितान्यथाऽनुपपत्त्येकलक्षणो हेतुः ॥११॥ न तु त्रिलक्षणकादिः ॥१२॥ तस्य हेत्वाभासस्यापि सम्भवात् ॥१३॥ अप्रतीतमनिराकृतमभीप्सितं साध्यम् ॥१४॥ शङ्कितविपरीतानध्यवसितवस्तुनां साध्यताप्रतिपत्त्यर्थमप्रतीतवचनम् ॥१५॥ प्रत्यक्षादिविरुद्धस्य साध्यत्वं मा प्रसज्यतामित्यनिराकृतग्रहणम् ॥ १६ ॥ अनभिमतस्यासाध्यत्वप्रतिपत्तयेऽभीप्सितपदोपादानम् ॥१७॥ व्याप्तिग्रहणसमयापेक्षया साध्यं धर्म एवान्यथा तदनुपपत्तेः ॥१८॥ नहि यत्र यत्र धूमस्तत्र तत्र चित्रभानोरिव धरित्रीधरस्याप्यनुवृत्तिरस्ति ॥१९॥ आनुमानिकप्रतिपत्त्यवसरापेक्षया तु पक्षापरपर्यायस्तद्विशिष्टः प्रसिद्धो धर्मी ॥२०॥ धर्मिणः प्रसिद्धिः क्वचिद्विकल्पतः क्वचित्प्रमाणतः क्वापि विकल्पप्रमाणाभ्याम् ॥२१॥ यथा समस्ति समस्तवस्तुवेदी क्षितिधरकन्धरेयं धूमध्वजवती ध्वनिः परिणतिमानिति ॥ २२ ॥ पक्षहेतुवचनात्मकं परार्थमनुमानमुपचारात् ॥ २३ ॥ साध्यस्य

प्रतिनियतधर्म्मिसंबन्धितामसिद्धये हेतोरुपसंहारवचनवत्पक्षप्रयोगोऽप्यवश्यमाश्रयितव्यः ॥२४॥ त्रिविधं साधनमभिधायैव तत्समर्थनं विदधान कः खलु न पक्षप्रयोगमङ्गीकुरुते ॥२५॥ प्रत्यक्षपरिच्छिन्नार्थाभिधायि-वचनं परार्थं प्रत्यक्षं, परप्रत्यक्षहेतुत्वात् ॥२६॥ यथा पश्य पुरः स्फुरत्किरणमणिखण्डमण्डिताभरणभारिणीं जिनपतिप्रतिमामिति ॥२७॥ पक्षहेतुवचनलक्षणमवयवद्वयमेव परप्रतिपत्तेरङ्गं, न दृष्टान्तादिवचनम् ॥२८॥ हेतुप्रयोगस्तथोपपत्त्यन्यथाऽनुपपत्तिभ्यां द्विप्रकारः ॥२९॥ सत्येव साध्ये हेतोरुपपत्तिस्तथोपपत्तिः। असति साध्ये हेतोरनुपपत्तिरेवान्यथाऽनुपपत्तिः ॥३०॥ यथा कृशानुमानयं पाकप्रदेशः, सत्येव कृशानुमत्त्वे धूमवत्त्वस्योपपत्तेरसत्यनुपपत्तेर्वेति ॥ ३१ ॥ अनयोरन्यतरप्रयोगेणैव साध्यप्रतिपत्तौ द्वितीयप्रयोगस्यैकत्रानुपयोगः ॥ ३२ ॥ न दृष्टान्तवचनं परप्रतिपत्तये प्रभवति, तस्यां पक्षहेतुवचनयोरेव व्यापारोपलब्धेः ॥ ३३ ॥ नच हेतोरन्यथानुपपत्तिनिर्णीतये, यथोक्ततर्कप्रमाणादेव तदुपपत्तेः ॥३४॥ नियतैकविशेषस्वभावे च दृष्टान्ते साकल्येन व्याप्तेरयोगतो विप्रतिपत्तौ तदन्तरापेक्षायामनवस्थितेर्दुर्निवारः समवतारः ॥३५॥ नाप्यविनाभावस्मृतये, प्रतिपन्नप्रतिबन्धस्य व्युत्पन्नमतेः पक्षहेतुप्रदर्शनेनैव तत्प्रसिद्धेः ॥३६॥ अन्तर्व्याप्त्या हेतोः साध्यप्रत्यायने शक्तावशक्तौ च बहिर्व्याप्तेरुद्भावनं व्यर्थम् ॥३७॥ पक्षीकृत एव विषये साधनस्य साध्येन व्याप्तिरन्तर्व्याप्तिः अन्यत्र तु बहिर्व्याप्तिः, यथाऽनैकान्तात्मकं वस्तु सत्त्वस्य तथैवोपपत्तेः,–अग्निमानयं देशो धूमवत्त्वात्, य एवं स एवं, यथा-पाकस्थानम् ॥३८॥ नोपनयनिगमनयोरपि परप्रतिपत्तौ सामर्थ्यं, पक्षहेतुप्रयोगादेव तस्याः सद्भावात् ॥३९॥ समर्थनमेव परं परप्रतिपत्त्यङ्गमास्तां, तदन्तरेण दृष्टान्तादिप्रयोगेऽपि तदसंभवात् ॥४०॥ मन्दमतींस्तु व्युत्पादयितुं दृष्टान्तोपनयनिगमनान्यपि प्रयोज्यानि ॥४१॥ प्रतिबन्धप्रतिपत्तेरास्पदं दृष्टान्तः ॥४२॥ स द्वेधा–साधर्म्यतो वैधर्म्यतश्च ॥४३॥ यत्र साधनधर्मसत्तायामवश्यं साध्यधर्मसत्ता प्रकाश्यते स साधर्म्यदृष्टान्तः

॥४४॥ यथा यत्र धूमस्तत्र वह्निर्यथा महानसः ॥४५॥ यत्र तु साध्याभावे साधनस्यावश्यमभावः प्रदर्श्यते स वैधर्म्यदृष्टान्तः ॥४६॥
यथाऽग्न्यभावे न भवत्येव धूमो यथा जलाशये ॥४७॥ हेतोः साध्यधर्मिण्युपसंहरणमुपनयः ॥४८॥ यथा धूमवांश्चायं प्रदेशः ॥४९॥
साध्यधर्मस्य पुनर्निगमनम् ॥५०॥ यथा तस्मादग्निरत्र ॥५१॥ एते पक्षप्रयोगादयः पञ्चाप्यवयवसंज्ञया कीर्त्यन्ते ॥५२॥ उक्तलक्षणो
हेतुर्द्विप्रकार, उपलब्ध्यनुपलब्धिभ्यां भिद्यमानत्वात् ॥५३॥ उपलब्धिर्विधिनिषेधयोः सिद्धिनिबन्धनमनुपलब्धिश्च ॥५४॥ विधिः
सदंश ॥५५॥ प्रतिषेधोऽसदंशः ॥ ५६ ॥ स चतुर्धा प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभावश्च ॥५७॥ यन्निवृत्तावेव
कार्यस्य समुत्पत्तिः सोऽस्य प्रागभावः ॥५८॥ यथा मृत्पिण्डनिवृत्तावेव समुत्पद्यमानस्य घटस्य मृत्पिण्डः ॥५९॥ यदुत्पत्तौ कार्यस्या-
वश्यं विपत्तिः सोऽस्य प्रध्वंसाभावः ॥६०॥ यथा कपालकदम्बकोत्पत्तौ नियमतो विपद्यमानस्य कलशस्य कपालकदम्बकम् ॥६१॥
स्वरूपान्तरात् स्वरूपव्यावृत्तिरितरेतराभावः ॥६२॥ यथा स्तम्भस्वभावात् कुम्भस्वभावव्यावृत्तिः ॥६३॥ कालत्रयापेक्षिणी तादात्म्य
परिणामनिवृत्तिरत्यन्ताभावः ॥६४॥ यथा चेतनाचेतनयोः ॥६५॥ उपलब्धेरपि द्वैविध्यम्-अविरुद्धोपलब्धिर्विरुद्धोपलब्धिश्च ॥६६॥
तत्राविरुद्धोपलब्धिर्विधिसिद्धौ षोढा ॥६७॥ साध्येनाविरुद्धानां व्याप्यकार्यकारणपूर्वचरोत्तरचरसहचराणामुपलब्धिरिति ॥६८॥
तमस्विन्यामास्वाद्यमानादाम्रादिफलरसादेकसामग्र्यनुमित्या रूपाद्यनुमितिमभिमन्यमानैरभिमतमेव किमपि कारणं हेतुतया यत्र
शक्तेरप्रतिस्खलनमपरकारणसाकल्यं च ॥६९॥ पूर्वचरोत्तरचरयोर्न स्वभावकार्यकारणभावौ, तयोः कालव्यवहितावनुपलम्भात् ॥७०॥
न चातिक्रान्तानागतयोर्जाग्रद्दशासंवेदनमरणयोः प्रबोधोत्पातौ प्रति कारणत्वं, व्यवहितत्वेन निर्व्यापारत्वात् ॥७१॥ स्वव्यापारापे
क्षिणी हि कार्यं प्रति पदार्थस्य कारणत्वव्यवस्था, कुलालस्येव कलशं प्रति ॥ ७२ ॥ न च व्यवहितयोस्तयोर्व्यापारपरिकल्पनं

न्याय्यमतिप्रसक्तेः ॥७३॥ परपराव्यवहितानां परेषामपि तत्कल्पनस्य निवारयितुमशक्यत्वात् ॥७४॥ सहचारिणोः परस्परस्वरूप-
परित्यागेन तादात्म्यानुपपत्तेः सहोत्पादेन तदुत्पत्तिविपत्तेश्च सहचरहेतोरपि प्रोक्तेषु नानुप्रवेशः ॥ ७५ ॥ ध्वनिः परिणतिमान्
प्रयत्नानन्तरीयकत्वात्, यः प्रयत्नानन्तरीकः स परिणातिमान्, यथा स्तम्भो, यो वा न परिणतिमान् स न प्रयत्नानन्तरीयको, यथा
वान्ध्येय., प्रयत्नानन्तरीयकश्च ध्वनिस्तस्मात्परिणातिमानिति व्याप्यस्य साध्येनाविरुद्धस्योपलब्धिः साधर्म्येण वैधर्म्येण च ॥७६॥
अस्त्यत्र गिरिनिकुञ्जे धनञ्जयो धूमसमुपलम्भादिति कार्यस्य ॥७७॥ भविष्यति वर्षं तथाविधवारिवाहविलोकनादिति कारणस्य
॥७८॥ उदेष्यति मुहूर्तान्ते तिष्यतारका पुनर्वसूदयदर्शनादिति पूर्वचरस्य ॥७९॥ उदगुर्मुहूर्तात्पूर्वं पूर्वफाल्गुन्य उत्तरफाल्गुनीना-
मुद्गमोपलब्धरित्युत्तरचरस्य ॥ ८० ॥ अस्तीह सहकारफले रूपविशेषः समास्वाद्यमानरसविशेषादिति सहचरस्य ॥ ८१ ॥
विरुद्धोपलब्धिस्तु प्रतिषेधप्रतिपत्तौ सप्तप्रकारा ॥८२॥ तत्राद्या स्वभावविरुद्धोपब्धिर्यथा ॥८३॥ नास्त्येव सर्वथैकान्तोऽनेकान्तस्यो-
पलम्भात् ॥८४॥ प्रतिषेध्यविरुद्धव्याप्तादीनामुपलब्धयः षट् ॥ ८५ ॥ विरुद्धव्याप्तोपलब्धिर्यथा नास्त्यस्य पुंसस्तत्त्वेषु निश्चय-
स्तत्र सन्देहात् ॥८६॥ विरुद्धकार्योपलब्धिर्यथा न विद्यतेऽस्य क्रोधाद्युपशान्तिर्वदनविकारादेः ॥८७॥ विरुद्धकारणोपलब्धिर्यथा
नास्य महर्षेरसत्यं वचः समस्ति रागद्वेषकालुष्याकलङ्कितज्ञानसंपन्नत्वात् ॥८८॥ विरुद्धपूर्वचरोपलब्धिर्यथा नोद्गमिष्यति मुहूर्तान्ते
पुष्यतारा रोहिण्युद्गमात् ॥८९॥ विरुद्धोत्तरचरोपलब्धिर्यथा नोदगाद् मुहूर्तात्पूर्वं मृगशिरः पूर्वफाल्गुन्युदयात् ॥९०॥ विरुद्धस-
हचरोपलब्धिर्यथा नास्त्यस्य मिथ्याज्ञान सम्यग्दर्शनात् ॥९१॥ अनुपलब्धेरपि द्वैरूप्यम्-अविरुद्धानुपलब्धिर्विरुद्धानुपलब्धिश्च॥९२॥
तत्राविरुद्धानुपलब्धिः प्रतिषेधावबोधे सप्तप्रकारा ॥९३॥ प्रतिषेध्येनाविरुद्धानां स्वभावव्यापककार्यकारणपूर्वचरोत्तरचरसहचरा-

...मनुपम इत्यादि ॥९४॥ स्वभावानुपलब्धिर्यथा नास्त्यत्र भूतले कुम्भ उपलब्धिलक्षणप्राप्तस्य तत्स्वभावस्यानुपलम्भात् ॥९५॥ व्यापकानुपलब्धिर्यथा नास्त्यत्र प्रदेशे पनसः पादपानुपलब्धेः ॥९६॥ कार्यानुपलब्धिर्यथा नास्त्यत्राप्रतिहतशक्तिकं बीजमङ्कुरानवलोकनात् ॥९७॥ कारणानुपलब्धिर्यथा न सन्त्यस्य प्रशमप्रभृतयो भावास्तत्त्वार्थश्रद्धानाभावात् ॥९८॥ पूर्वचरानुपलब्धिर्यथा नोद्गमिष्यति मुहूर्तान्ते स्वातिनक्षत्रं चित्रोदयादर्शनात् ॥९९॥ उत्तरचरानुपलब्धिर्यथा नोदगमत् पूर्वभद्रपदा मुहूर्तात् पूर्वमुत्तरभद्रपदोद्गमनात् ॥१००॥ सहचरानुपलब्धिर्यथा नास्त्यस्य सम्यग्ज्ञानं सम्यग्दर्शनानुपलब्धेः ॥१०१॥ विरुद्धानुपलब्धिस्तु विधिप्रतीतौ पञ्चधा ।१०२॥ विरुद्धकार्यकारणस्वभावव्यापकसहचरानुपलम्भभेदात् ॥ १०२ ॥ विरुद्धकार्यानुपलब्धिर्यथाऽत्र शरीरिणि रोगातिशयः समस्ति नीरोगव्यापारानुपलब्धेः ॥१०३॥ विरुद्धकारणानुपलब्धिर्यथा विद्यतेऽत्र प्राणिनि कष्टमिष्टसंयोगाभावात् ॥१०४॥ विरुद्धस्वभावानुपलब्धिर्यथा वस्तुजातमनेकान्तात्मकमेकान्तस्वभावानुपलम्भात् ॥१०५॥ विरुद्धव्यापकानुपलब्धिर्यथाऽस्त्यत्र छाया औष्ण्यानुपलब्धेः ॥१०६॥ विरुद्धसहचरानुपलब्धिर्यथा अस्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनानुपलब्धेः ॥१०७॥

इति [illegible]नुमानस्वरूपनिर्णयो नाम तृतीयः परिच्छेदः ॥ ३ ॥

## अथ चतुर्थ परिच्छेद

आप्तवचनादिनिबन्धनमर्थज्ञानमागमः ॥ १ ॥ उपचारादाप्तवचनञ्च ॥२॥ यथा समस्त्यत्र प्रदेशे रत्ननिधाने सन्ति रत्नसानुप्रभृतय ॥ ३ ॥ अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञानं चाभिधत्ते स आप्तः ॥४॥ तस्य हि वचनमविसंवादि

भवति ॥५॥ स च द्वेधा—लौकिको लोकोत्तरश्च ॥६॥ लौकिको जनकादिर्लोकोत्तरस्तु तीर्थकरादि ॥ ७ ॥ वर्णपदवाक्यात्मकं वचनम् ॥८॥ अकारादिः पौद्गलिको वर्णः ॥ ९ ॥ वर्णानामन्योऽन्यापेक्षाणां निरपेक्षा संहतिः पदं, पदानान्तु वाक्यम् ॥१०॥ स्वाभाविकसामर्थ्यसमयाभ्यामर्थबोधनिबन्धनं शब्दः ॥ ११ ॥ अर्थप्रकाशकत्वमस्य स्वाभाविकं प्रदीपवत्, यथार्थत्वायथार्थत्वे पुनः पुरुषगुणदोषावनुसरतः ॥ १२ ॥ सर्वत्रायं ध्वनिर्विधिप्रतिषेधाभ्यां स्वार्थमभिदधानः सप्तभङ्गीमनुगच्छति ॥ १३ ॥ एकत्र वस्तुन्येकैकधर्मपर्यनुयोगवशादविरोधेन व्यस्तयोः समस्तयोश्च विधिनिषेधयोः कल्पनया स्यात्काराङ्कितः सप्तधा वाक्प्रयोगः सप्तभङ्गी ॥ १४ ॥ तद्यथा—स्यादस्त्येव सर्वमिति विधिकल्पनया प्रथमो भंगः ॥ १५ ॥ स्यान्नास्त्येव सर्वमितिनिषेधकल्पनया द्वितीयः ॥ १६ ॥ स्यादस्त्येव स्यान्नास्त्येवेति क्रमतो विधिनिषेधकल्पनया तृतीयः ॥ १७ ॥ स्यादवक्तव्यमेवेति युगपद्विधिनिषेधकल्पनया चतुर्थः ॥ १८ ॥ स्यादस्त्येव स्यादवक्तव्यमेवेति विधिकल्पनया युगपद्विधिनिषेधकल्पनया च पञ्चम ॥ १९ ॥ स्यान्नास्त्येव स्यादवक्तव्यमेवेति निषेधकल्पनया युगपद्विधिनिषेधकल्पनया च षष्ठः ॥ २० ॥ स्यादस्त्येव स्यान्नास्त्येव स्यादवक्तव्यमेवेति क्रमतो विधिनिषेधकल्पनया युगपद्विधिनिषेधकल्पनया च सप्तम इति ॥ २१ ॥ विधिप्रधान एव ध्वनिरिति न साधुः ॥ २२ ॥ निषेधस्य तस्मादप्रतिपत्तिप्रसक्तेः ॥ २३ ॥ अप्राधान्येनैव ध्वनिस्तमभिधत्ते इत्यप्यसारम् ॥ २४ ॥ क्वचित्कदाचित्कथञ्चित्प्राधान्येनाप्रतिपन्नस्य तस्याप्राधान्यानुपपत्तेः ॥ २५ ॥ निषेधप्रधान एव शब्द इत्यपि प्रागुक्तन्यायादपास्तम् ॥२६॥ क्रमादुभयप्रधान एवायमित्यपि न साधीयः ॥२७॥ अस्य विधिनिषेधान्यतरप्रधानत्वानुभवस्याप्यबाध्यमानत्वात् ॥२८॥ युगपद्विधिनिषेधात्मनोऽर्थस्यावाचक एवासौ इति वचो न चतुरस्रम् ॥२९॥ तस्यावक्तव्यशब्देनाप्यवाच्य-

न्यमयान् ॥३० ॥ विध्यात्मनाऽर्थस्य वाचक एव सन्नुभयात्मनो युगपद्वाचक एव स इत्येकान्तोऽपि न कान्तः ॥३१॥ निषेधात्मन सहभ्याम्भ्यामन्वाचार्य वाचकत्वाचाचकत्वाभ्यामपि शब्दस्य प्रतीयमानत्वात् ॥ ३२ ॥ निषेधात्मनोऽर्थस्य वाचकः सन्नुभयात्मनो युगपद्वाचक एवायमित्यप्यवधारणं न रमणीयम् ॥ ३३ ॥ इतरथापि संवेदनात् ॥ ३४ ॥ क्रमाक्रमाभ्यामुभयस्वभावस्य भावस्य वाचकश्चावाचकश्च ध्वनिर्नान्यथा इत्यपि मिथ्या ॥ ३५ ॥ विधिप्राधान्यप्रधानतयाऽपि तस्य प्रसिद्धेः ॥ ३६ ॥ एकत्र वस्तुनि विधीयमाननिषिध्यमानानन्तधर्माभ्युपगमेनानन्तभङ्गीप्रसङ्गादसङ्गतैव सप्तभङ्गीति न चेतसि निधेयम् ॥३७॥ विधिनिषेधप्रकारापेक्षया प्रतिपर्यायं वस्त्वन्यनन्तानामपि सप्तभङ्गीनामेव सम्भवात् ॥ ३८ ॥ प्रतिपर्यायं प्रतिपाद्यपर्यनुयोगानां सप्तानामेव संभवात् ॥ ३९ ॥ तेषामपि सप्तत्वं सप्तविधतज्जिज्ञासानियमात् ॥४०॥ तस्या अपि सप्तविधत्वं सप्तधैव तत्सन्देहसमुत्पादात् ॥ ४१ ॥ तस्याऽपि सप्तप्रकारत्वनियमः स्वगोचरवस्तुधर्माणां सप्तविधत्वस्यैवोपपत्तेः ॥ ४२ ॥ इयं सप्तभङ्गी प्रतिभङ्गं सकलादेशस्वभावा विकलादेशस्वभावा च ॥ ४३ ॥ प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुनः कालादिभिरभेदवृत्तिप्राधान्यादभेदोपचाराद्वा यौगपद्येन प्रतिपादकं वचः सकलादेशः ॥ ४४ ॥ तद्विपरीतस्तु विकलादेशः ॥४५॥ तद् द्विभेदमपि प्रमाणमात्मीयप्रतिबन्धकापगमविशेषस्वरूपसामर्थ्यतः प्रतिनियतमर्थमवद्योतयति ॥ ४६ ॥ न तदुत्पत्तितदाकारताभ्याम्, तयोः पार्थक्येन सामस्त्येन च व्यभिचारेणासम्भवम् ॥ ४७ ॥

इति आगमप्रमाणस्वरूपनिर्णयो नाम चतुर्थः परिच्छेदः ॥ ४ ॥

## अथ पञ्चम परिच्छेदः

तस्य विषयः सामान्यविशेषाद्यनेकान्तात्मकं वस्तु ॥१॥ अनुगतविशिष्टाकारप्रतीतिविषयत्वात् प्राचीनोत्तराकारपरि-त्यागोपादानावस्थानस्वरूपपरिणत्याऽर्थक्रियासामर्थ्यघटनाच्च ॥२॥ सामान्यं द्विप्रकारं–तिर्यक्सामान्यमूर्ध्वतासामान्यञ्च ॥ ३ ॥ प्रतिव्यक्ति तुल्या परिणतिस्तिर्यक्सामान्य शबलशाबलेयादिपिण्डेषु गोत्वं यथा ॥४॥ पूर्वापरपरिणामसाधारणं द्रव्यमूर्ध्वतासामान्यं कटककङ्कणाद्यनुगामि काञ्चनवत् ॥५॥ विशेषोऽपि द्विरूपो गुणः पर्यायश्च ॥६॥ गुणः सहभावी धर्मो यथाऽऽत्मनि विज्ञान-व्यक्तिशक्त्यादिः ॥७॥ पर्यायस्तु क्रमभावी यथा तत्रैव सुखदुःखादिः ॥ ८ ॥

इति विषयस्वरूपनिर्णय नाम पञ्चमः परिच्छेदः ॥ ३ ॥

## अथ षष्ठ परिच्छेदः

यत्प्रमाणेन प्रसाध्यते तदस्य फलम् ॥१॥ तद् द्विविधम्–आनन्तर्येण पारम्पर्येण च ॥२॥ तत्राऽऽनन्तर्येण सर्वप्रमाणा-नामज्ञाननिवृत्तिः फलम् ॥३॥ पारम्पर्येण केवलज्ञानस्य तावत्फलमौदासीन्यम् ॥४॥ शेषप्रमाणानां पुनरुपादानहानोपेक्षाबुद्धयः ॥ ५ ॥ तत्प्रमाणतः स्याद्भिन्नमभिन्नं च प्रमाणफलत्वान्यथानुपपत्तेः ॥ ६ ॥ उपादानबुद्ध्यादिना प्रमाणाद्भिन्नेन व्यवहितफलेन

तन्मुनिमण्डलमिति यथा ॥ ३२ ॥ तुल्ये पदार्थे स एवायमितिएकस्मिंश्च तेन तुल्य इत्यादि ज्ञानं प्रत्यभिज्ञानाभासम् ॥ ३३ ॥ यमलकजातवत् ॥३४॥ असत्यामपि व्याप्तौ तदवभासः तर्काभासः ॥३५॥ स श्यामो मैत्रतनयत्वात् इत्यत्र यावान् मैत्रतनयः स श्याम इति यथा ॥३६॥ पक्षाभासादिसमुत्थं ज्ञानमनुमानाभासमवसेयम् ॥३७॥ तत्र प्रतीतनिराकृतानभीप्सितसाध्यधर्मविशेषणास्त्रयः पक्षाभासाः ॥३८॥ प्रतीतसाध्यधर्म्मविशेषणो यथाऽऽर्हतान् प्रत्यवधारणवर्जं परेण प्रयुज्यमानः समस्ति जीव इत्यादिः ॥३९॥ निराकृतसाध्यधर्मविशेषणः प्रत्यक्षानुमानागमलोकस्ववचनादिभिः साध्यधर्मस्य निराकरणादनेकप्रकारः ॥४०॥ प्रत्यक्षनिराकृतसाध्यधर्मविशेषणो यथा नास्ति भूतविलक्षण आत्मा ॥४१॥ अनुमाननिराकृतसाध्यधर्मविशेषणो यथा नास्ति सर्वज्ञो वीतरागो वा ॥४२॥ आगमनिराकृतसाध्यधर्मविशेषणो यथा जैनै रजनीभोजनं भजनीयम् ॥४३॥ लोकनिराकृतसाध्यधर्म्मविशेषणो यथा न पारमार्थिकः प्रमाणप्रमेयव्यवहारः ॥४४॥ स्ववचननिराकृतसाध्यधर्मविशेषणो यथा नास्ति प्रमेयपरिच्छेदक प्रमाणम् ॥४५॥ अनभीप्सितसाध्यधर्मविशेषणो यथा स्याद्वादिनः शाश्वतिक एव कलशादिरशाश्वतिक एव वेति वदत ॥४६॥ असिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः ॥४७॥ यस्यान्यथाऽनुपपत्तिः प्रमाणेन न प्रतीयते सोऽसिद्धः ॥४८॥ स द्विविधः—उभयासिद्धोऽन्यतरासिद्धश्च ॥४९॥ उभयासिद्धो यथा परिणामी शब्दश्चाक्षुषत्वात् ॥५०॥ अन्यतरासिद्धो यथा अचेतनास्तरवो विज्ञानेन्द्रियायुर्निरोधलक्षणमरणरहितत्वात् ॥५१॥ साध्यविपर्ययेणैव यस्यान्यथाऽनुपपत्तिरध्यवसीयते स विरुद्धः ॥५२॥ यथा नित्य एव पुरुषोऽनित्य एव वा प्रत्यभिज्ञानादिमत्त्वात् ॥५३॥ यस्यान्यथाऽनुपपत्तिः सन्दिह्यते सोऽनैकान्तिकः ॥५४॥ स द्वेधा—निर्णीतविपक्षवृत्तिकः सन्दिग्धविपक्षवृत्तिकश्च ॥ ५५ ॥ निर्णीतविपक्षवृत्तिको यथा नित्यः शब्दः प्रमेयत्वात् ॥ ५६ ॥ सन्दिग्धविपक्षवृत्तिको यथा

विप्रलापक पुरुष सर्वज्ञो न भवति वक्तृत्वात् ॥५७। साधर्म्येण दृष्टान्ताभासो नवप्रकार ॥५८॥ साध्यधर्मविकलः साधनधर्मविकल उभयधर्मविकल सन्दिग्धसाध्यधर्मा सन्दिग्धसाधनधर्मा सन्दिग्धोभयधर्मा अनन्वयोऽप्रदर्शितान्वयो विपरीतान्वयश्चेति ॥ ० ॥ नपौरुषेयः शब्दो मूर्तत्वात् दुःखवदिति साध्यधर्मविकलः ॥ १ ॥६०॥ तस्यामेव प्रतिज्ञायां तस्मिन्नेव हेतौ परमाणुवदिति साधनधर्मविकलः ॥ २ ॥६१॥ कलशवदित्युभयधर्मविकल ॥ ३ ॥६२॥ रागादिमानयं वक्तृत्वाद्देवदत्तवदिति सन्दिग्धसाध्यधर्मा ॥३॥६३॥ मरणधर्माऽयं रागादिमत्त्वात् मैत्रवदिति सन्दिग्धसाधनधर्मा ॥५॥६४॥ नायं सर्वदर्शी रागादिमत्त्वात् मुनिविशेषवदिति सन्दिग्धोभयधर्मा ॥ ६ ॥६५॥ रागादिमान् विवक्षित पुरुषो वक्तृत्वादिष्टपुरुषवदित्यनन्वय ॥७॥६६॥ अनित्य शब्द कृतकत्वात् घटवदित्यप्रदर्शितान्वयः ॥ ८ ॥६७॥ अनित्य शब्दः कृतकत्वात्, यदनित्य तत् कृतकं घटवदिति विपरीतान्वय ॥ ९ ॥६८॥ वैधर्म्येणापि दृष्टान्ताभासो नवधा ॥६९॥ असिद्धसाध्यव्यतिरेकोऽसिद्धसाधनव्यतिरेकोऽसिद्धोभयव्यतिरेकः सन्दिग्धसाध्यव्यतिरेक सन्दिग्धसाधनव्यतिरेकः सन्दिग्धोभयव्यतिरेकोऽव्यतिरेकोऽप्रदर्शित व्यतिरेको विपरीतव्यतिरेकश्च ।७०॥ नेषु भ्रान्तमनुमानं प्रमाणत्वात्, यत्पुनर्भ्रान्तं न भवति न तत् प्रमाणं यथा स्वप्नज्ञानमिति असिद्धसाध्यव्यतिरेकः, स्वप्नज्ञानात् भ्रान्तत्वस्यानिवृत्तेः ॥ १ ॥७१॥ निर्विकल्पकं प्रत्यक्षं प्रमाणत्वात् यत्तु सविकल्पकं न तत्प्रमाणं, यथा लैङ्गिकमित्यसिद्धसाधनव्यतिरेको, लैङ्गिकात्प्रमाणत्वस्यानिवृत्तेः ॥२॥७२॥ नित्यानित्यः शब्दः सत्त्वात् यस्तु न नित्यानित्यः स न सन् यथा स्तम्भ इत्यसिद्धोभयव्यतिरेक, स्तम्भान्नित्यानित्यत्वस्य सत्त्वस्य चाव्यावृत्तेः ॥३॥७३॥ असर्वज्ञोऽनाप्तो वा कपिलोऽक्षणिकैकान्तवादित्वात्, यः सर्वज्ञ आप्तो वा स क्षणिकैकान्तवादी, यथा सुगतः इति सन्दिग्धसाध्यव्यतिरेकः, सुगतेऽसर्वज्ञतानाप्तत्वयोः

साध्यधर्म्मयोर्व्यावृत्तेः सन्देहात् ॥४॥ ७४ ॥ अनादेयवचनः कश्चिद्विवक्षितः पुरुषो रागादिमत्त्वाद्यः पुनरादेयवचनः स वीतरागस्तद्यथा शौद्धोदनिरिति सन्दिग्धसाधनव्यतिरेकः, शौद्धोदनौ रागादिमत्त्वस्य निवृत्तेः संशयात् ॥ ७५ ॥५ ॥ न वीतरागः कपिलः करुणास्पदेष्वपि परमकृपयाऽनर्पितनिजपिशितशकलत्वात् यस्तु वीतरागः स करुणास्पदेषु परमकृपया समर्पितनिजपिशितशकलस्तद्यथा तपनबन्धुरिति सन्दिग्धोभयव्यतिरेकः, तपनबन्धौ वीतरागत्वाभावस्य करुणास्पदेष्वपि परमकृपयानर्पितनिजपिशितशकलत्वस्य च व्यावृत्तेः सन्देहात् ॥ ६ ॥ ७६ ॥ न वीतरागः कश्चिद्विवक्षितः पुरुषो वक्तृत्वात् यः पुनर्वीतरागो न स वक्ता यथोपलखण्ड इत्यव्यतिरेकः ॥ ७७ ॥ ७ ॥ अनित्यः शब्दः कृतकत्वादाकाशवदित्यप्रदर्शितव्यतिरेकः ॥७८ ॥ ७ ॥ अनित्यः शब्दः कृतकत्वाद्यदकृतकं तन्नित्यं यथाकाशमिति विपरीतव्यतिरेकः ॥७९॥ ९ ॥ उक्तलक्षणोल्लङ्घनेनोपनयनिगमनयोर्वचने तदाभासौ ॥ ८० ॥ यथा परिणामी शब्दः कृतकत्वात् यः कृतकः स परिणामी यथा कुम्भ इत्यत्र परिणामी च शब्द इति कृतकश्च कुम्भ इति च ॥ ८१ ॥ तस्मिन्नेव प्रयोगे तस्मात् कृतकः शब्द इति तस्मात्परिणामी कुम्भ इति च ॥८२॥ अनाप्तवचनप्रभवं ज्ञानमागमाभासम् ॥ ८३ ॥ यथा मेकलकन्यकायाः कूले तालहिंतालयोर्मूले सुलभाः पिण्डखर्जूराः सन्ति त्वरित गच्छत २ शावकाः ! ॥ ८४ ॥ प्रत्यक्षमेवैकं प्रमाणमित्यादि संख्यानं तस्य संख्याभासम् ॥ ८५ ॥ सामान्यमेव, विशेष एव, तद्द्वयं वा स्वतन्त्रमित्यादिस्तस्य विषयाभासः ॥ ८६ ॥ अभिन्नमेव भिन्नमेव वा प्रमाणात्फलं तस्य तदाभासम् ॥ ८७ ॥

इति फलप्रमाणस्वरूपाद्याभासनिर्णयो नाम षष्ठः परिच्छेदः ॥

नीयते येन श्रुताख्यप्रमाणविषयीकृतस्यार्थस्यांशस्तदितरांशौदासीन्यतः स प्रतिपत्तुरभिप्रायविशेषो नयः ॥ १ ॥ स्वामि-

तद्भेदेन तस्य तमेव समर्थयमानस्तदाभासः ॥ ३४ ॥ यथा बभूव भवति भविष्यति सुमेरुरित्यादयो भिन्नकालाः शब्दा भिन्नमेयार्थमभिदधति भिन्नकालशब्दत्वात्ताद्दृक्सिद्धान्यशब्दवदित्यादिः ॥ ३५ ॥ पर्यायशब्देषु निरुक्तिभेदेन भिन्नमर्थं समभिरोहन् समभिरूढः ॥ ३६ ॥ इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात् पुरन्दर इत्यादिषु यथा ॥ ३७ ॥ पर्यायध्वनीनामभिधेयनानात्वमेव कक्षीकुर्वाणस्तदाभासः ॥ ३८ ॥ यथेन्द्रः शक्रः पुरन्दर इत्यादयः शब्दा भिन्नाभिधेया एव भिन्नशब्दत्वात् करिकुरङ्गतुरङ्गशब्दवदित्यादिः ॥ ३९ ॥ शब्दानां स्वप्रवृत्तिनिमित्तभूतक्रियाविष्टमर्थं वाच्यत्वेनाभ्युपगच्छन्नेवंभूतः ॥ ४० ॥ यथेन्दनमनुभवन्निन्द्रः शकनक्रियापरिणतः शक्रः पूर्दारणप्रवृत्तः पुरन्दर इत्युच्यते ॥ ४१ ॥ क्रियानाविष्टं वस्तु शब्दवाच्यतया प्रतिक्षिपस्तु तदाभासः ॥ ४२ ॥ यथा विशिष्टचेष्टाशून्यं घटाख्यं वस्तु न घटशब्दवाच्यं घटशब्दप्रवृत्तिनिमित्तभूतक्रियाशून्यत्वात् पटवदित्यादिः ॥ ४३ ॥ एतेषु चत्वारः प्रथमेऽर्थनिरूपणप्रवणत्वादर्थनयाः ॥४४॥ शेषास्तु त्रयः शब्दवाच्यार्थगोचरतया शब्दनयाः ॥४५॥ पूर्वः पूर्वो नयः प्रचुरगोचरः, परः परस्तु परिमितविषयः ॥ ४६ ॥ सन्मात्रगोचरात्संग्रहान्नैगमो भावाभावभूमिकत्वाद् भूमविषयः ॥४७॥ सद्विशेषप्रकाशकाद्व्यवहारतः संग्रहः समस्तसत्समूहोपदर्शकत्वात् बहुविषयः ॥ ४८ ॥ वर्त्तमानविषयादृजुसूत्राद्व्यवहारस्त्रिकालविषयावलम्बित्वादनल्पार्थः ॥ ४९ ॥ कालादिभेदेन भिन्नार्थोपदर्शिनः शब्दादृजुसूत्रस्तद्विपरीतवेदकत्वान्महार्थः ॥५०॥ प्रतिपर्यायशब्दमर्थभेदमभीप्सतः समभिरूढाच्छब्दस्तद्विपर्ययानुयायित्वात् प्रभूतविषयः ॥५१॥ प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवंभूतात्समभिरूढस्तदन्यथार्थस्थापकत्वान्महागोचरः ॥ ५२ ॥ नयवाक्यमपि स्वविषये प्रवर्त्तमानं विधिप्रतिषेधाभ्यां सप्तभङ्गीमनुव्रजति ॥ ५३ ॥ प्रमाणवदस्य फलं व्यवस्थापनीयम् ॥ ५४ ॥ प्रमाता प्रत्यक्षादिप्रसिद्ध आत्मा ॥ ५५ ॥ चैतन्यस्वरूपः परिणामी कर्त्ता साक्षाद्भोक्ता स्वदेहपरिमाणः प्रतिक्षेत्रं भिन्नः पौद्गलिकादृष्टवांश्चायम् ॥५६॥ तस्योपात्तपुंस्त्री-

विर्सितणेण, तसिं न संविसमुवेति मंदे ॥१॥" अहवा पुव्वकएण कम्मेण मूढो कर्तकितें—किचकिर्च ण याणती बहुरूयन्नया, वा मम्मयणिओ विद्धगो, एव बहुमायी बहुकोडी, से एव कामकामीभूते बहुमायी कयाकयमूढो 'पुणो त करेति' पुणो विसेसणे, किं विसेसेति ?, एव णाम स पुव्वकएण कम्मेण मूढो कम्मफल वेदेंतो पुणो आसंसणाए मायावी 'लोभ' करेति नगरादिमवा लोभं करेंति—विम्भसेइ, 'वेर बड्ढतीति' अभिमाणपुव्वगो भमरिसो वेरं तन्निमयकमायवसगो हिंसादिपवत्तो अनतसंसारियं करेति, भणिय च—"दुःखात्तः सेवते कामान्, सेविनास्ते च दुःखदाः । यदि ते न प्रिय दुःख, प्रसङ्गस्तेषु न क्षम ॥ १ ॥" 'जमिण परिकहिज्जति' जदीति अपुरिसस्स गरयं, भण्णति—कतरस्स अपुरिसस्स ?, कामकमस्स बहुमायिणो मूढस्स 'इमस्स चेव पडिबूहणाए'त्ति इमस्स मस्सेव सरीरगस्स परिबूहणताए हिंसादिसु पवत्तति किस्सते य, भणिय च लोगेऽवि—"शिश्नो दरकृते पार्थ !, पृथिवी जेतुमिच्छसि । जय शिश्नोदरं पार्थ !, ततस्ते पृथिवी जिता ॥ १ ॥" अहवा इमस्स चेव परिबूहणताए, कामकमे बहुमायी पुणो त करेति एतपि एयस्स चेव परिबूहणयाए, अहवा जे इमे मायाइ या पमाया पुणो पुणो आहिज्जंति एतवि एयस्स चेव जीवियस्स, इमस्सवि—इमस्स पंचविहायारस्स समणेरस्स वा समंता बूहणा परिबूहणा, कई णाम एयस्स पुणो पुणो अहिज्जमाणेसु पमायदोसेसु अप्पमाया गुणेसु य पयासियपुव्वअप्पाहणियादिदिट्ठंतेण संजमे परिविंपणा भविज्जा ?, इम अयं संजम अपरिविंपणामेव पमायदोसकर्यं—'अमराइ महासड्ढी' य मरंति अमरो अणमरो भविया अमर इव अप्पाण मण्णते भोगासया अत्थउवज्जणपरो, तस्स उदाहरणं केई भणंति—रायगिहे णगरे मगहसेणा, कस्सइ सत्थवाहस्स अभिगयागयस्स अभिसारिया णिग्गया, सा य तेणऽसेगहत्थगएण आयत्ता, सोऽवेतेण तेण मज्झे रविं अगाधइवा समाणी पभाते णिग्गया, अदीतीए

अतिजागरितेण य दुम्मणा, अंजलिकारिगा गता समाणी जरासंधेण पुच्छिया—काए अद्धिती दुक्खं वा ? कैणय वऽसि अज्ज व सद्धिं पासुत्तत्ति ?, तीए भण्णति—अमरेण सद्धिं, कहि सो ?, सत्थनिवेसे, पुरिसेहिं गवेसाविओ, तहेव आयव्वयं करेइ, पच्छा ताए सब्भावो कहितो, अहवा पज्जोयकालसंदीव उत्तरकुरुगमणं महिलापेच्छणं महिलाय पायपडिवज्जगं अंगारवती देवी पुव्वपडियरिव आगंतु पसत्थाहगमणं, आयव्वयसोहणं, वितियदिवसे तुमंतुमी, पज्जोतपुच्छणं, कोहेण वणियवाहणं पुच्छगं च रयणचोरियउत्ति सुंकभंजणावायचिंतणं ऊरणियागलगंधणं पवेसगं विसज्जगं सोउं हत्थी वा कामगोत्तं विवित्ता विसंभसुहोवगतं रोएत्ति, चिर तओवि ण इच्छितो, महती सद्धा जस्स अत्थकामेसु स भवति महासड्ढी 'अट्टमेतं उपेहाए' अट्टो णाम अट्टज्झाणोवगतो रागदोसट्टितो वा तमेवं उवेहाए, पेच्छाहि ताव इहेव दुक्खी, किंनु परलोगे ?, अहवा एवं णच्चा महासड्ढी इहेव दुक्खं तं अट्टज्झाणं, पुव्वावरे उवेहा, सो एवं अट्टो 'अपरिण्णाए कंदति' दुविहाएवि परिण्णाए अपरिण्णायपरिग्गहे अप्पत्ते कंखाए णट्ठे सोएणाकंदति सोयति तिप्पति 'से एवमायाणह' से इति णिद्देसे जं इमं कहितं अवत्थं जाणह आयाणह णच्चा सद्दहित्ता य पमायं जहुद्दिट्ठं वज्जेतुं अप्पमायं आयरंतो, अहवा इमं आयाणह 'जं बेमि तेइच्छं पंडिते पवत्तमाणो' चिगिच्छापंडितो विज्जो, भिसं वतमाणो पवयमाणो, ते वा जहुद्दिट्ठए तिगिच्छिए पंडिए पवत्तमाणे बहुजीवे 'हंता' हंता, भूतसंहितं गाहते वा, गहित्ता हणंति, भित्ता पुढविकायं वालाणि वा छित्ता वणस्सतिं मियपुंछमाइ वा लुंपित्ता अणेगविहं, उद्दवइत्ता मारेत्ता तित्तिरादि रसगणिमित्तं हि ते जहुद्दिट्ठा वा गेण्हित्ता हुणंति, 'अकडं करिस्सामित्ति मण्णमाणे' अकतं आरोग्गं अस्सणिग्गहिअस्स तिगिच्छएहि वा, अहवा अकयपुव्वो एस जोगो अण्णेहि य पयोगो वा जेण लट्ठीकरेमिण्हिं, अहवा कयस्स कारणं णत्थि अण्णेण, सो संयोगो,

सम्मं, एवं उवसमियाणं जाव सम्मं मोहणिज्जं उवसमं, एवं खओवसमियाणंपि, जहा नाणचउक्कस्स य, खओवसमियस्स चरित्तस्स, एवमादि सम्मं बुज्झमाणो, बोहो चउव्विहो, णामबोहो ठवणबोहो दव्वबोहो भावबोहो, णामठवणाओ गयाओ, दव्वबोहो जं चेयणातिदव्वे बोहो सो दव्वबोहो, जहाविसयं धारिओ, अगतेण नासाए पक्खित्तेण, भावे अप्पसत्थे तिन्नि तिमट्ठाइं पवातिमयाइं अप्पसत्थभावबुज्झमाणाइं, अपरिग्गाहिता ण किंचिदवि, बुज्झंति तहावि मिच्छादिट्ठी, पसत्थे नाणादि बुज्झमाणे 'आताणीतं समुट्ठाता' दव्वायाणीयं जो जं दव्वं सचित्तादि गिण्हति सो दव्वाताणीउ, जं भणितं—दव्वपयोयणा, अप्पसत्थभावाताणट्ठीया गिहत्था विसयकसायपयोयणा, अन्नउत्थियाण विस्सुता ते अट्ठिया, पसत्थभावादाणट्ठीओ अट्ठविहकम्मनिज्जरट्ठीओ, संमं उत्थाणं समुत्थाणं, दव्वओ जं दव्वं उत्तिट्ठति तं दव्वसमुट्ठाणं, तंजहा—विसमविज्जऊासु पडिओ पडणभएण वा वल्लिं लतां वा अवलंब उत्तिट्ठति तं दव्वसमुत्थाणं, भावे अप्पसत्थो तिण्हं तिमट्ठाणं पावाउयसयाणं अप्पणप्पएण उट्ठाणं, अहवा विसयकसायोट्ठाणं, पसत्थभावोट्ठाणं णाणादी, पसत्थेण अहीगारो, तेण उत्थाय 'तम्हा पावं कम्मं' तम्हा इति तम्हा कारणा संबुज्झमाणो आताणीयं समुट्ठाए पावं—हिंसादि जाव मिच्छादंसणसल्लं तं मत ण कुज्जा णो अण्णेहिं कारवे करेंतंऽपण्णं णाणुमोदए, अणुमोदणा अकरणाकारणेण गहिता, णवए णवभेदेण, तंच पावं—हिंसादि छसु काएसु, सुत्ते संबंधो भाणियव्वो, नाणादितियं च उतारेयव्वं, ते य अवाया नाणादिसहितस्स ण भवंति, रागादिसहितस्स हिंसादिपवत्तस्स भवंति, अवाया किं ?, एगकायं आरभमाणस्स तदारभे सेसारभोऽवि, एगतर आसवपत्तस्स किं एगो भवति सव्वेऽवि ?, भण्णति—'सिया से एगतरं विप्परामुसति' सिया—कयाई से इति असंजतस्स निद्देसो पमत्तसंजमो वा, एगमवि पुढविकायं किमु सव्वकाए ?, विविधं परामुसति हत्थ-

पादफण्हकठिणअंगुलिपठागादीहिं समक्ख पहण, ज भणितं–चालण, किच्च्यासकरण परितावण, पाणववरोवण उद्वये, एव सो एगमवि समारभमाणो 'छण्हु अण्णतरं' छविति संसा, छण्हवि कायाणं समारंभे कप्पति, ज भणित–पडुति, दव्वओ कुम्भगार सालाउवगघरपलोइणदिट्ठंतेणं, भावतो अविरतणा, पाणातिवातआसवदारविधाता एगजीवअतिवाती एगकायपाती वा, सव्व जीवातिवाती भवति, पेरितो लोएणं अलियं, ण य तस्स समारंभो तित्थगरेहिं अणुण्णाओ जेसिं वा जीवाण ते सरीरा तेहिं तं अदत्तं, मावजम्भरयेण य परिग्गहो भवति, अहवा त सद्दातीणं विसयाण अत्थे समारभति, तप्परिग्गहो य ण रागदोसेहिं विणा भवति, मेहुणरातिभत्ताणिवि विसय एव, अतो छण्हु अण्णतरंसि, अहवा चउहिं आसवदारेहिं अवगतेहिं कह पउत्थछक्कयाण अपडाण ?, अतो छण्हु अण्णतरंसि, किंच–सव्वभावजोगविरतस्स एगतरखतभंगे कह ण सव्वभंगो ?, भणिय वा–"खंडे भग्गे सगले भग्गे" एव छण्हु अण्णतरंति, अहवा सिया एगतरं सो एव पुढविकाय समारभति अण्णतरं वा तस्स छण्हु अण्णतरेसु अवयास भवि ण पडिसिज्झति, तस्स समारंभये वा तप्पाउग्गाइं कम्माइं भविणा तेसु चेव काएसु सई असई च उप्पज्जइ, तत्थ सरीरा-दिहिं दुक्खेहिं कप्पति, जं भणितं–पडुति, किमत्थं परिसविवाग कम्म आरभति ?, भण्णति–'से सुहत्थी' सुहेण जस्स अट्ठो, ज भणित–सुहमओयणी, तत्थ करिसणादिकम्मेहिं सुहत्थी पुढवी समारभति ण्हाणातिनिमित्तं उदग, एवं सेसकायाणवि भाणि-यव्वं, तं पुण अप्पणो परस्स वा सुहत्थी आरभति, रागादिसहितो असंजओ, पमत्तसंजओवि कोइ सुहत्थी काये आरभति, संजहा रससुहत्थी सचित्त लवणं गिण्हति, मच्छियातिकातेण वाउच्छेण पयमादि, आउंमि अचित्तस्स आउकाय, उदउल्लेण वा हत्थेण, एवं सेसएसुवि भाणियव्वं, अयत्य–पुणो पुणो लप्पमाणो लालप्पमाणो, जं भणित मुए परवेमाणो, स एव लालप्पमाणो 'सएण

दुक्खेणं' सएणंति अप्पणएणं दुक्खं—कम्मोदओ तेण वाहिज्जमाणो परितप्पमाणो तप्पडिसेवाए सुहट्ठी नियट्टति, मोहो णाम हिताहिते निविसेसता, अहवा एरिसे पुरिसे हिते अहितबुद्धी, अहिते हितमारभति, एव कज्जाकज्जे वज्जावज्जे, सो मूढत्ता णाभियाणति जहा अप्पस्स सुहस्स कारणा पुढविकायातिममारभेण अणंतकालं संसारे अणुभवति दुक्खं, जहा अत्तट्ठा तहा परट्ठावि, मातापितिमादीणं कारणा पुढविमादी समारभति ततो विपरियासं एति, सो एवं हितपरिण्णाणमूढो 'सएण विप्पमाएणं' अप्पणएणं विविधो विरुद्धो वा पमादो विप्पमादो, कारणे कज्जुवयारा, सएण विप्पमादेण अंजसं—अत्यर्थं, अंजसा विप्पमायकरणे कम्मुणा 'पुढो वयं'ति विच्छिण्णो वयो असुमदीहाउयं अणेगविहं वा वयं पत्तेयं पत्तेयं छसु जीवनिकाएसु आउयं, पुणो पुणो वा वयं पुढोवयं—मिसं कुव्वति, कह तत्थ य सारीरातीएहिं दुक्खेहिं पच्चति ?, भणति—'जस्सिमे पाणा पव्वहिता' जंमि एते—एगिंदियादिपाणा पव्वहिता, तेहि तेहि पयोयणे य बाधिता, केण ?, असंजतेहि कुप्पावंडीहि य, परोप्परओ य पुढोवयं कुव्वंति, इति—एवं पडिलेहमाणो, पडिलेहाए पडिलेहित्ता, जं भणियं-जाणित्ता, णो पडिसेहे, अकरणा, केसिं अकरणं ?, पाणाइवायमादीणं कम्माणं, जा एतेसि अकरणा सा किं भणति ?—'एस पइण्णा पवुच्चति' एसा णाम जा एसा वुत्ता पाणाइवायाईणं अकरणा सा जया दुविहाए परिण्णाए परिण्णाया भवति एसा परिण्णा कम्मोवसंतित्ति वा एगट्ठा, केसिंचि अकंमाणं चोरादिगहियाणं कुलिंगीणं च अणुवाएणं उवसंती भवति, ण परिण्णा, कम्मोवसंती पवुच्चति, जं भणितं णवस्स कम्मस्स अकरणं पोराणस्स खवणं उवसंती वुच्चति, एस एव अच्चंतनिरावरणो महव्वयअणुपालणअहिगारो अणुयत्तति, एव य उवसंती भवति, तत्थ उवसंतलक्खणं—सव्वं पाणाइवायं तिविहं तिविहेण ण करेइ, एवं जाव परिग्गहं, तत्थ अहिंसादीणं परूवेऊणं चत्तारि जहा वेरमणा परिग्गहे न भवति

तहा भण्णति, जहा भण्णति–'जे ममाइतमती' पच्छाणुपुव्वी वा एसा, जे इति अणुद्दिट्ठस्स, कस्स ?, ममीकितं ममाइतं, तंजहा– मम माता मम पिता मम भगिणी मम भाता मम घण्णाति, ममायिते मती ममाइयमती, कहं मम एवंविहा विसया भविज्जा ?, पचेहिवि वस्स रस्सणमती, अत्थि सुहं च, विणट्ठे सोगो, परिग्गहे इच्छा ममीकारमिति, भरहसामिणा आदंसघरे पविट्ठेण ममीकारमती अस्त, जो य एत ममायिए मतिं जहाति सो जहाति ममाइयं, तंजहा–घरप हिरण्णसुवण्णधणधण्णाइ ममाइ त रस अब्भतरे वा इस्सरिय सरीरं च, अहवा सचित्तअचित्तमीसाइं दव्वाइ ममाइ, त संखेवत्थो सो तण्हं वोच्छिंदति सो परिग्गहं जहति, जो वा ममत्तं छिंदति सो ममाइतमं जहति, अप्पउरियपरिं जाव किंचिवि जइ सचित्ताति लहवि सरीरादिसक्कारआहार सुच्छामत्ता उदेसियमोइत्ता रागदोसाणुगयचा य ममत्तणा लब्भति, दव्वोवसती य सा, ण परिण्णा कम्मोवसंती य, एव सव्वेसुवि पदेसु आयोज्जं, जो य एवं वत्तसु अवट्ठितो भवति 'से हु दिट्ठपहे मुणी' दिस्सति दिट्ठं, गम्मति जेण सो पंथो, जेस णाणा- दीणि मोक्खपहो, विवरीतो अपहो, स जेण दिट्ठो सो दिट्ठपथो, पठिज्जइ य–'दिट्ठभए मुणी' भय भयविह, कतरो सो णट्ठ मुणी ?, ध–'जस्स णत्थि ममाइतं' उवदरिसयसुत्तं, तं परिण्णाय, कमिति ?, पुव्वपगतावकस्सी ममाइय दुविहाए परिण्णाए पावा पच्च- पलोय वा विदित्ता, तंजहा–'अहे वयति कोहण०' विमयलोग च, तजहा–किंपाकफलसमाना विषया हि निसेव्यमाणरमणीयाः । पश्चाद् भवन्ति कटुका अशुचिफलनिव पनैस्तुल्या' ॥ १ ॥ पाणअज्जासवलोयस्स य इध परत्थ य अवाए विदित्ता 'वता लोग मण्णं' पमिया–विराय अनक्किरिया, असंजयलोयस्स सण्णा–हिंसादिक्रियापवित्ती मिच्छादंसणअभिग्गहा वा, सा य दुक्खं

वंता लोअमणं लोउत्तरे धम्मे ठितो वमिज्जति एवं णच्चा 'से मतिमं परक्कमिज्जा' सेत्ति णिद्देसे, मती से अत्थि तेण मतिमं, अहिंसादिवंतलोगे च परक्कमिज्जासि, एवं तित्थगरआणाए बेमि, णो स्वेच्छया, अहिगारसमत्तीए एवं बेमि, ण अज्झयणसमत्तीए, एवं परक्कममाणो वड्ढमाणो 'णारतिं' समाइतमति 'सहती वीरे' ण इति पडिसेधे, सध्रणं मरिसणं, जति णाम कदायि तस्स परक्कमतो तवणियमसंजमेसु अरती भवेज्जा ततो तं खणमित्तमवि ण सहति, खिप्पमेव ज्झाणेण मणतो निच्छुभति–णिव्विसयं करेति, वीर इति 'विदारयति तत्कर्म, तपसा च विराजते। तपोवीर्येण युक्तश्च, वीरो वीरेण दर्शितः ॥ १ ॥' जहेव संजमे अरतिं ण सहति तहेव विसयकसायादिलक्खणे असंजमे जति कहंचि तस्स रती उप्पज्जति तंपि खणमित्तमवि ण सहति–ण खमति, धम्मज्झाणसहगतो उप्पण्णमित्तं णिक्कासति, 'जम्हा अविमणे' जम्हा सो इट्ठाणिट्ठेसु पत्तेसु विसएसु धितिबलअस्सितो अविमणो भवति, अहवा जम्हा सो संजमे अरतिं ण सहति असंजमे अ रतिं तेण मज्झत्थो णिच्चमेव अविमणो धीरो 'तम्हादेव विरज्जते' विसएसु, ते य सद्दादि कामपज्जता, जतो इमं सुत्तं–'सद्दे फासे य०' आदिअन्तग्गहणा मज्झग्गहणं, अहियासमणं णाम इट्ठाणिट्ठेसु रागदोसअकरणं, भणियं च–"सद्देसु य भद्दयपावएसु०" अहियासमणोवायो 'णिव्विंद णंदीं' णंदी पमोदं रमणे समिद्धीए य इस्सरियविभवकया मणसो तुट्ठी, ततो णिव्विद, जति अतिक्कंतकाले कस्सवि आसि तत्थ होऊण ण होति पुणो, अहवा जा कुमारजोव्वणादिसु णंदी तं निव्विदेज्जा. सणंकुमारचक्कवट्टिदिट्ठंतो, 'इह' मणुस्सजीविते असंजतजीविते वा विसयकसायजीविते वा पंचण्हा अवयाणं अतीत णिदति पडुप्पण्णं संवरेति अणागत पच्चक्खाति, केण आलंबणेण णिव्विदति तत्थ ?, 'मुणी मोणं समायाए' समणेत्ति वा माहणेत्ति वा मुणित्ति वा एगट्ठा, मुणिभावो मोणं, सम्मं संगत वा समत्थं वा आदाय,

